क्षुर्गृह्णामिप्रजाभ्यः ५६ इदमुत्तरात् ॥ इदमुत्तरात्स्वस्तस्यश्रो
त्रंसौवं शरच्छ्रौत्र्यनुष्टुप्शारद्यनुष्टुभऽऐडमैडान्मन्थीमन्थिनऽएक
विंशऽएकविंशाद्वैराजंविश्वामित्रऽऋषिःप्रजापतिगृहीतयात्त्व
याश्रोत्रंगृह्णामिप्रजाभ्यः ५७ इयमुपरिमतिस्तस्यैवाङ्मात्याहे
मन्तोवाच्यःपङ्क्तिर्हैमन्तीपङ्क्त्यैनिधनवन्निधनवतऽआग्रयणऽआ
ग्रयणात्त्रिणवत्रयस्त्रिंशौत्रिणवत्रयस्त्रिंशाभ्यांशाक्वररैवतेवि
श्वकर्मऽऋषिःप्रजापतिगृहीतयात्त्वयावाचंगृह्णामिप्रजाभ्यो
लोकन्ताऽइन्द्रम् ५८ [ ५ ] इतिश्रीवाजसनेयसंहितायांत्रयोदशो
ऽध्यायः १३ ध्रुवक्षितिःषट्सजूर्ऋतुभिर्मूर्द्धावयोर्द्विकाविंद्राग्नीआ

युमेँषट्कावाशुस्त्रिवृदेकाग्नेभांगोस्येकयाचतुष्कावष्टावेकत्रिꣳशत्॥
ध्रुवक्षितिर्ध्रुवयोनिः॥ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासिध्रुवंस्योनिमासी
दसाधुया॥ उख्यस्यकेतुम्प्रथमञ्जुषाणाश्विनाध्वर्यूसादयतामि
हत्वा १ कुलायिनीघृतवती॥ कुलायिनीघृतवतीपुरन्धिःस्योने
सीदसदनेपृथिव्याः॥ अभित्वारुद्रावसवोगृणन्त्विमाब्रह्मपीपिहि
सौभगायाश्विनाध्वर्यूसादयतामिहत्वा २ स्वैर्दक्षैः॥ स्वैर्दक्षैर्दक्ष
पितेहसीददेवानाꣳसुम्नेबृहतेरणाय॥ पितेवैधिसूनवऽआसुशेवा
स्वावेशातन्वासंविशस्वाश्विनाध्वर्यूसादयतामिहत्वा ३ पृथिव्याः
पुरीषम्॥ पृथिव्याःपुरीषमस्यप्सोनामतान्त्वाविश्वेऽअभिगृण

न्तुदेवाः ॥ स्तोमपृष्ठाघृतवतीहसीदप्रजावदस्मेद्रविणायजस्व । विश्ववनांबुस्सूसीदयतामिहत्वा ४ आदित्यास्त्वा ॥ पृष्ठेसादयाम्यन्तरिक्षस्यधर्त्रीविष्टम्भनीन्दिशामधिपत्नीम्भुवनानाम् ॥ ऊर्म्मिर्द्रप्सोऽअपामसिविश्वकर्म्मातऽऋषिरविश्ववनांबुस्सूसीदयतामिहत्वा ५ शुक्रश्च ॥ शुक्रश्चशुचिश्चग्रैष्म्मावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्तामापऽओषधयःकल्पन्तामग्नयःपृथङ्ममज्यैष्ठ्यायसव्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ ग्रैष्म्मावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ६ ॥ [ ६ ] सजूर्ऋतुभिः

 

सुजूर्ब्बिधाभिः सुजूर्द्देवैः सुजूर्द्देवैर्व्वयोनाधैरग्नयेत्त्वावैश्श्वानराया
श्श्विनाहुर्स्युर्सादयतामिहत्त्वासुजूर्कतुभिः सुजूर्ब्बिधाभिः सुजूर्व्वसु
भिः सुजूर्द्देवैर्व्वयोनाधैरग्नयेत्त्वावैश्श्वानरायाश्श्विनाहुर्स्युर्सादय
तामिहत्त्वासुजूर्कतुभिः सुजूर्ब्बिधाभिः सुजूरुद्रैः सुजूर्द्देवैर्व्वयोनाधैर
ग्नयेत्त्वावैश्श्वानरायाश्श्विनाहुर्स्युर्सादयतामिहत्त्वासुजूर्कतुभिः
सुजूर्ब्बिधाभिः सुजूरादित्यैः सुजूर्द्देवैर्व्वयोनाधैरग्नयेत्त्वावैश्श्वानरा
याश्श्विनाहुर्स्युर्सादयतामिहत्त्वासुजूर्कतुभिः सुजूर्ब्बिधाभिः सुजू
र्व्विश्श्वैर्द्देवैः सुजूर्द्देवैर्व्वयोनाधैरग्नयेत्त्वावैश्श्वानरायाश्श्विनाहुर्स्यु
र्सादयतामिहत्त्वा ७ प्प्राणम्मे ॥ पात्व्यपानम्मेपाहिव्यानम्मेपाहिच

क्षुर्म्मऽउर्व्याविभाहिश्श्रोत्रम्मेश्श्लोकय ॥ अपःपिन्वौषधीर्ज्जिन्व
द्विपादवचतुष्प्पात्पाहिदिवोवृष्टिमेरय ८ [ २ ] मूर्द्धावयःप्प्रजाप
तिश्छन्दःक्षत्रंवयोमयन्दञ्छन्दोविष्टम्भोवयोधिपतिश्छन्दोविश्श्व
कर्म्मावयःपरमेष्ठीछन्दोवस्तोवयोविवलञ्छन्दोवृष्ष्णिर्वयोविशा
लञ्छन्दःपुरुषोवयस्तन्द्रञ्छन्दोव्याग्घ्रोवयोनाधृष्टञ्छन्दःसिंहोव
यश्छदिश्छन्दःपष्ठवाड्वयोबृहतीछन्दऽउक्षावयःककुप्छन्दऽऋषभो
वयःसतोबृहतीछन्दोनड्वान्वयः ९ अनड्वान्वयः ॥ पङ्क्तिश्छन्दोधे
नुर्वयोजगतीछन्दस्त्र्यविर्वयस्त्रिष्टुप्छन्दोदित्यवाड्वयोविराट्छन्दःपञ्चा
विर्वयोगायत्रीछन्दस्त्रिवत्सोवयऽउष्णिक्छन्दस्तुर्य्यवाड्वयोनुष्टु

प्प्रच्छन्दोलोकन्ताऽइन्द्रम् १० [ २ ] इन्द्राग्ग्नीऽअव्व्यथमानाम् ॥ इ
न्द्राग्ग्नीऽअव्व्यथमानामिष्टकान्दृꣳहतंय्युवम् ॥ पृष्ठेनद्यावापृथिवीऽअ
न्तरिक्षञ्चविबाधसे ११ विश्श्वकर्म्मात्त्वा ॥ सादयत्त्वन्तरिक्षस्यपृ
ष्ठेव्व्यचस्वतीम्प्रथस्वतीमन्तरिक्षंय्यच्छान्तरिक्षन्दृꣳहान्तरिक्षम्माहिꣳ
सीः ॥ विश्श्वस्म्मैप्प्राणायापानायव्व्यानायोदानायप्प्रतिष्ठायैचरि
त्त्राय ॥ वायुष्ट्वाभिपातुमह्यास्वस्त्याछर्द्दिषाशन्तमेनतयादेवतयाङ्गि
रस्वद्ध्रुवासीद १२ शतम् ७०० ॥ राज्ञ्यसि ॥ राज्ञ्यसिप्प्राचीदिग्वि
राडसिदक्षिणादिक्सम्म्राडसिप्प्रतीचीदिक्स्वराडस्युदीचीदिग
धिपत्न्यसिबृहतीदिक् १३ विश्श्वकर्म्मात्त्वा ॥ सादयत्त्वन्तरिक्षस्य

पृष्ठेज्ज्योतिष्म्मतीम् ॥ विश्श्वंस्म्मैप्प्राणायांपानायंव्व्यानायविश्श्वं
ज्ज्योतिर्य्यच्छ ॥ वायुष्ट्टेधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रुवासीद १४ न
भश्च । नभस्यश्च्चवार्षिकावृतूऽअग्नेरन्तःश्लेषोसिकल्प्पेतान्द्यावा
पृथिवीकल्प्पन्तामापऽओषधयःकल्प्पन्तामग्नयःपृथङ्ममज्ज्यै
ष्ठ्यायसव्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ वा
र्षिकावृतूऽअभिकल्प्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतयादेव
तयाङ्गिरस्वद्ध्रुवेसीदतम् १५ इषश्च ॥ इषश्चोर्ज्जश्चशारदावृतूऽअ
ग्नेरन्तःश्लेषोसिकल्प्पेतान्द्यावापृथिवीकल्प्पन्तामापऽओषधयः
कल्प्पन्तामग्नयःपृथङ्ममज्ज्यैष्ठ्यायसव्रताः ॥ येऽअग्नयःसमन

सोन्तराद्यावापृथिवीऽइमे ॥ शरदावृतूऽअभिकल्प्पमानाऽइन्द्रमि
वदेवाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् १६ [ ६ ]
आयुर्म्मे ॥ पाहिप्प्राणम्मेपाह्यपानम्मेपाहिव्यानम्मेपाहिचक्षुर्म्मे
पाहिश्श्रोत्रम्मेपाहिवाचम्मेपिन्वमनोमेजिन्वात्मानम्मेपाहि
ज्योतिर्म्मेयच्छ १७ माछन्दः ॥ प्रमाछन्दःप्रतिमाछन्दोऽअस्री
वयश्छन्दःपङ्क्तिश्छन्दऽउष्णिक्छन्दोबृहतीछन्दोनुष्टुप्छन्दोविरा
ट्छन्दोगायत्रीछन्दस्त्रिष्टुप्छन्दोजगतीछन्दःपृथिवीछन्दः १८ पृथि
वीछन्दोन्तरिक्षञ्छन्दोद्यौश्छन्दःसमाश्छन्दोनक्षत्राणिछन्दोवाक्छ
न्दोमनश्छन्दःकृषिश्छन्दोहिरण्यञ्छन्दोगौश्छन्दोजाछन्दोश्श्व

श्छन्दः १९ अग्निर्देवता ॥ अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवता ऽऽदित्या देवता मरुतो देवता विश्वे देवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता २० मूर्द्धासि ॥ मूर्द्धासि राड् ध्रुवासि धरुणा धर्त्र्यसि धरणी ॥ आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा ॥ २१ ॥ यन्त्री राट् ॥ यन्त्री राड्यन्त्र्यसि यमनी ध्रुवासि धरित्री ॥ इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा लोकन्ताऽइन्द्रम् ॥ २२ [ ६ ] आशुस्त्रिवृत् ॥ आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा सप्तदशो धरुणऽएकविंशः प्रतूर्त्तिरष्टादशस्तपो नवदशोऽभीवर्त्तः सविंशो वर्चो द्वाविंशः सम्भरणस्त्रयोविंशो योनिश्चतुर्विंशो गर्भाः पञ्चविंश

ऽओजस्त्रिणवः क्रतुरेकत्रिꣳशः प्रतिष्ठा त्रयस्त्रिꣳशो ब्रध्नस्य विष्टपञ्च
तुस्त्रिꣳशो नाकः षट्त्रिꣳशो विवर्त्तोष्टाचत्वारिꣳशो धर्त्रञ्चतुष्टोमः २३[१]
अग्नेर्भागः ॥ अग्नेर्भागोसि दीक्षायाऽआधिपत्यम्ब्रह्म स्पृतन्त्रि
वृत्स्तोमऽइन्द्रस्य भागोसि विष्णोराधिपत्यङ्क्षत्रꣳस्पृतम्पञ्चदशस्तो
मो नृचक्षसाम्भागोसि धातुराधिपत्यञ्जनित्रꣳस्पृतꣳसप्तदशस्तोमो
मित्रस्य भागोसि वरुणस्याधिपत्यन्दिवो वृष्टिर्वातः स्पृतऽएकविꣳश
स्तोमो वसूनाम्भागः २४ वसूनाम्भागोसि रुद्राणामाधिपत्यञ्चतु
ष्पात्स्पृतञ्चतुर्विꣳशस्तोमऽआदित्यानाम्भागोसि मरुतामाधिप
त्यङ्गर्भाः स्पृताः पञ्चविꣳशस्तोमोदित्यै भागोसि पूष्णऽआधिपत्य

मोजंस्पृतन्त्रिणवस्तोमोदेवस्यंसवितुर्भागोसिबृहस्पतेराधिपत्य
ᳪसमीचीर्द्दिशंस्पृताश्चतुष्टोमस्तोमोयवांनाम्भागः २५ यवांनाम्भा
गोस्ययवांनामाधिपत्यम्प्रजास्पृताश्चतुश्चत्वारि ᳪ शस्तोमऽऋभू
णाम्भागोसिविश्वेषान्देवानामाधिपत्यम्भूतᳪस्पृतन्त्रयस्त्रि ᳪ श
स्तोमः सहश्च २६ सहश्च ॥ सहस्यश्चहैमन्तिकावृतूऽअग्नेरन्तः
श्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्तामापऽओषधयःकल्पन्
न्तामग्नयःपृथङ्ममज्यैष्ठ्यायसव्रताः ॥ येऽअग्नयःसमनसोन्त
राद्यावापृथिवीऽइमे ॥ हैमन्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिवदे
वाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् २७ [४] एकं

यास्तुवत ॥ प्प्रजाऽअधीयन्तप्प्रजापतिरधिपतिरासीत्तिसृभिरस्तु
वतब्ब्रह्मासृज्यतब्ब्रह्मणस्प्पतिरधिपतिरासीत्पञ्चभिरस्तुवतभूता
न्यसृज्यन्तभूतानाम्पतिरधिपतिरासीत्सप्तभिरस्तुवतसप्तऽऋष
योसृज्यन्तधाताधिपतिरासीन्नवभिरस्तुवत २८ नवभिरस्तुवत
॥ पितरोसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुवतऽऋतवोसृ
ज्यन्तार्त्तवाऽअधिपतयऽआसँस्त्रयोदशभिरस्तुवतमासाऽअसृज्य
न्तसंवत्सरोधिपतिरासीत्पञ्चदशभिरस्तुवतक्षत्त्रमसृज्यतेन्द्रोधिप
तिरासीत्सप्तदशभिरस्तुवतग्ग्राम्म्याऽपशवोसृज्यन्तबृहस्प्पतिर
धिपतिरासीन्नवदशभिरस्तुवत २९ नवदशभिरस्तुवत ॥ शूद्रार्य्यावं

सृज्येतामहोरात्रे ऽ अधिपत्नी ऽआस्तामेकविꣳशत्यास्तुवतैकश
फाःपशवोसृज्यन्तव्वरुणोधिपतिरासीत्त्रयोविꣳशत्यास्तुवतक्षुद्राः
पशवोसृज्यन्तपूषाधिपतिरासीत्पञ्चविꣳशत्त्यास्तुवतारण्याः पश
वोसृज्यन्तव्वायुरधिपतिरासीत्सप्तविꣳशत्यास्तुवतद्यावापृथिवी
व्यैतांव्वसवोरुद्राऽआदित्त्याऽअनुव्व्यायँस्तऽएवाधिपतयऽआसन्नव
विꣳशत्त्यास्तुवत ३० नवविꣳशत्त्यास्तुवत ॥ व्वनस्प्पतयोसृज्य
न्तसोमोधिपतिरासीदेकत्त्रिꣳशतास्तुवतप्प्रजाऽअसृज्यन्तयवा
श्चायवाश्चाधिपतयऽआसँस्त्रयस्त्रिꣳशतास्तुवतभूतान्यशाम्म्यन्प्र
जापतिःपरमेष्ठ्यधिपतिरासील्लोकन्ताऽइन्द्रम् ३१ [ ४ ] इतिसंहि

तायांचतुर्द्दशोध्यायः १४ अग्नेजातान्पंचरश्मिनासत्यायचतस्रो
राड्यस्ययंपुरःपंचकावग्निर्मूर्द्धैकोनात्रिं६शद्येनऽऋषयोष्टौतपश्चनव
सप्तपंचषष्टिः ॥ अग्नेजातान् ॥ अग्नेजातान्प्रणुदानःसुपत्नान्प्र
त्यजातान्नुदजातवेदः ॥ अधिनोब्रूहिसुमनाऽअहेडँस्तवंस्यामुशर्म्मं
स्त्रिवरूथऽउद्भौ ॥ १ ॥ सहंसाजातान् ॥ सहंसाजातान्प्रणुदानःसु
पत्नान्प्रत्यजाताञ्जातवेदोनुदस्व ॥ अधिनोब्रूहिसुमनस्यमानोव
यंᳬस्यामप्रणुदानःसुपत्नान् २ षोडशीस्तोमं ÷ ॥ षोडशीस्तोम
ऽओजोद्रविणञ्चतुश्चत्वारिᳬंशस्तोमोवर्च्चोद्रविणम् ॥ अग्नेःपुरीष



मस्यप्सोनामतान्त्वाविश्वेऽअभिगृणन्तुदेवाः ॥ स्तोमंपृष्ठाघृतवं

तीहसीदप्प्रजावदस्म्मेद्द्रविणायजस्व ३ एवश्छन्दः ॥ एवश्छन्दोव
रिवश्छन्दः शम्भूश्छन्दःपरिभूश्छन्दऽआछ्छछन्दोमनश्छन्दोव्यच
श्छन्दःसिन्धुश्छन्दःसमुद्रश्छन्दःसरिरञ्छन्दःककुप्छन्दस्त्रिककु
प्छन्दःकाव्यञ्छन्दोऽअङ्कुपञ्छन्दोक्षरपङ्क्तिश्छन्दःपदपङ्क्तिश्छन्दो
विष्टारपङ्क्तिश्छन्दःक्षुरोभ्भ्रजश्छन्दऽआछ्छछन्दःप्रछ्छछन्दः ४ आ
छ्छछन्दःप्रछ्छछन्दः ॥ संयच्छन्दोवियच्छन्दोबृहच्छन्दोरथन्तरञ्छन्दो
निकायश्छन्दोविवधश्छन्दोगिरश्छन्दोभ्भ्रजश्छन्दः संस्तुप्छ
न्दोनुष्टुप्छन्दऽएवश्छन्दोवरिवश्छन्दोवयश्छन्दोवयस्कृच्छन्दोविष्पर्
द्धाश्छन्दोविशालञ्छन्दश्छदिश्छन्दोदूरोहणञ्छन्दस्तन्द्रञ्छन्दोऽअ

ङ्क्ङ्क्छन्दः ५ [ ५ ] रश्मिनासत्यायत्वा सत्याय जिन्व प्रेतिना धर्म्मणा धर्म्मं जिन्वान्वित्या दिवा दिवं जिन्व सन्धिनान्तरिक्षेणा न्तरिक्षं जिन्व प्रतिधिना पृथिव्या पृथिवीं जिन्व विष्टम्भेन वृष्ट्या वृष्टिं जिन्व प्रवयान्हाहर्ज्जिन्वानुया रात्र्या रात्रीं जिन्वोशिजा वसुभ्यो वसूञ्जिन्व प्रकेतेनादित्येभ्य आदित्याञ्जिन्व तन्तुना रायः ६ तन्तुना रायस्पोषेण रायस्पोषं जिन्व स ६ सर्पेणश्श्रुतायश्श्रुतञ्जिन्वैडेनौषधीभिरोषधीर्ज्जिन्वोत्तमेन तनूभिस्तनूर्ज्जिन्व वयोधसाधीतेनाधीतञ्जिन्वाभिजिता तेजसा तेजो जिन्व ७ प्रतिपदसि प्रतिपदे त्वानुपदस्यनुपदे त्वा सम्पदसि सम्पदे त्वा तेजोसि तेजसे त्वा त्रिवृदसि ८

त्रिवृदसि ॥ त्रिवृतेत्वाप्प्रवृदसिप्प्रवृतेत्वाव्विवृदसिव्विवृतेत्वासवृदसि
सवृतेत्वाक्क्रमोस्याक्क्रमायत्वासङ्क्रमोसिसङ्क्रमायत्वोत्क्रमोस्युत्क्रमा
यत्वोत्क्रान्तिरस्युत्क्रान्त्यैत्वाधिपतिनोर्ज्जोर्ज्जञ्जिन्व ९ [४] राज्ञ्य
सि॥ राज्ञ्यसिप्प्राचीदिग्वसवस्तेदेवाऽअधिपतयोग्निर्हेतीनाम्प्रति
धर्त्तात्रिवृत्त्वास्तोम÷पृथिव्याᳫंश्रयत्त्वाज्यमुक्थमव्यथायैस्तभ्ना
तुरथन्तरᳫ सामप्प्रतिष्ठित्त्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवे
षुदिवोमात्रयाव्वरिम्णाप्प्रथन्तुव्विधर्त्ताचायमधिपतिश्चतेत्त्वासर्व्वे
संव्विदानानाकस्यपृष्ठेस्वर्ग्गेलोकेयजमानञ्चसादयन्तु १० व्विराडसि
व्विराडसिदक्षिणादिग्रुद्रास्तेदेवाऽअधिपतयऽइन्द्रोहेतीनाम्प्रतिधर्त्ता

पंञ्चदशस्त्वास्तोमं÷पृथिव्याꣳश्श्रयतुप्प्रऽउंगमुक्थमव्व्यथायैस्तब्भ्ना
तुबृहत्सामप्प्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवो
मात्त्रयावरिम्णाप्प्रथन्तुविधर्त्ताचायमधिपतिश्चतेत्त्वासर्वेसंविदा
नानाकस्यपृष्ठेस्वर्ग्गेलोकेयजमानञ्चसादयन्तु ११ सम्म्राडसि॥प्प्र
तीचीदिगादित्यास्तेदेवाऽअधिपतयोवरुणोहेतीनाम्प्रतिधर्त्तासप्प्त
दशस्त्वास्तोमं÷पृथिव्याꣳश्श्रयतुमरुत्त्वतीयमुक्थमव्व्यथायैस्तब्भ्नातु
वैरूपꣳसामप्प्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवो
मात्त्रयावरिम्णाप्प्रथन्तुविधर्त्ताचायमधिपतिश्चतेत्त्वासर्वेसंविदाना
नाकस्यपृष्ठेस्वर्ग्गेलोकेयजमानञ्चसादयन्तु १२ स्वराडसि॥स्वरा

डस्युदीचीदिङ्मरुतस्तेदेवाऽअधिपतयुः सोमोहेतीनाम्प्रतिधुर्त्तैकवि
ꣳशस्त्वास्तोमः पृथिव्याꣳश्रयतुनिष्केवल्यमुक्थमव्यथायैस्तभ्ना
तुवैराजꣳ सामुप्रतिष्ठित्याऽअन्तरिक्षुऽऋषयस्त्वाप्रथमजादेवेषु
दिवोमात्रयावरिम्णाप्रथन्तुविधुर्त्ताचायमधिपतिश्चुतेत्वासर्वेसं
विदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु १३ अधिपत्न्य
सि ॥ बृहतीदिग्विश्वेतेदेवाऽअधिपतयोबृहस्पतिर्हेतीनाम्प्रति
धर्त्तात्रिणवत्रयस्त्रिꣳशौत्वास्तोमौपृथिव्याꣳश्रयतांवैश्वदेवाग्नि
मारुतेऽउक्थेऽअव्यथायैस्तभ्नीताꣳ शाक्वररैवतेसामनीप्रतिष्ठित्या
ऽअन्तरिक्षुऽऋषयस्त्वाप्रथमजादेवेषुदिवोमात्रयावरिम्णाप्रथन्तु

विधर्त्ताचायमधिपतिश्चतेत्त्वासर्वेसंविदानानाकस्यपृष्ठेस्वर्गेलो
केयजमानञ्चसादयन्तु १४ [ ५ ] अयम्पुरः ॥ अयम्पुरोहरिकेशः
सूर्य्यरश्मिस्तस्यरथगृत्सश्चरथौजाश्चसेनानीग्ग्रामण्यौ ॥ पुञ्जि
कस्थलाचक्रतुस्थलाचाप्प्सरसौदङ्क्ष्णवः पशवोहेतिः पौरुषेयोव
धः प्प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोय
श्चनोद्वेष्टितमेषाञ्जम्भेदध्मः १५ अयन्दक्षिणा ॥ विश्वकर्म्मात
स्यरथस्वनश्चरथेचित्रश्चसेनानीग्ग्रामण्यौ ॥ मेनकाचसहजन्या
चाप्प्सरसौयातुधानाहेतीरक्षांसिप्प्रहेतिस्तेभ्योनमोऽअस्तुतेनो
वन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः १६

अयम्पश्चात् ॥ अयंपुश्चाद्विश्वव्यचास्तस्यरथप्प्रोतुश्चासमर
थश्चसेनानीग्ग्रामुण्ण्यौ ॥ प्रम्म्लोचन्तीचानुम्म्लोचन्तीचाप्प्सुर
सौव्व्याग्घ्राहेतिःसुप्पाःप्प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृड
यन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः १७ अयमुत्तरात् ॥ अ
यमुत्तरात्संयद्वसुस्तस्यतार्क्ष्यश्चारिष्टनेमिश्चसेनानीग्रामुण्ण्यौ ॥
विश्वाचीचघृताचीचाप्प्सरसावापोहेतिर्वातःप्प्रहेतिस्तेभ्योनमो
ऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेद
ध्मः १८ अयमुपरि ॥ अयमुपर्य्यर्वाग्ग्वसुस्तस्यसेनुजिच्चसुषे
णश्चसेनानीग्ग्रामुण्ण्यौ ॥ उर्वशीचपूर्वचित्तिश्चाप्प्सुरसाववस्फू

ज्यन्हेतिर्व्विद्युत्प्रहेतिस्तेब्भ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते य
न्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः १९ [ ५ ] अग्निर्म्मूर्द्धा ॥
दिवः ककुत्पतिः पृथिव्व्याऽअयम् ॥ अपांरेतांसि जिन्वति २०
अयमग्निः ॥ सहस्रिणो वाजस्य शतिनस्पतिः ॥ मूर्द्धा कवी रयी
णाम् २१ त्वामग्ने ॥ त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ॥ मू
र्ध्नो विश्वस्य वाघतः २२ भुवो यज्ञस्य ॥ भुवो यज्ञस्य रजसश्च ने
ता यत्रा नियुद्भिः सचसे शिवाभिः ॥ दिवि मूर्द्धानन्दधिषे स्वर्षां जिह्वा
मग्ने चकृषे हव्यवाहम् २३ अबोध्यग्निः ॥ समिधा जनानाम्प्रति
धेनुमिवायतीमुषासम् ॥ यह्वाऽइव प्रवयामुज्जिहानाः प्रभानवः

सिस्नतेनाकुमचर्च्छं २४ अवोचामकवये ॥ अवोचामकवयेमेध्यांय
वचोवन्दारुवृषभायवृष्णे ॥ गविष्ठिरोनमसास्तोममग्नौदिवीवरुक्म
मुरुव्यश्चमश्रेत् २५ अयमिह ॥ प्रथमोधायिधातृभिर्होतायजि
ष्ठोऽअध्वरेष्वीड्यः ॥ यमप्नवानोभृगवोविरुरुचुर्वनेषुचित्रंविभ्वं
विशेविशे २६ जनस्यगोपाः ॥ जनस्यगोपाऽअजनिष्टजागृविर
ग्निःसुदक्षःसुवितायनव्यसे ॥ घृतप्रतीकोबृहतादिविस्पृशाद्युमद्वि
भातिभरतेभ्यःशुचिः २७ त्वामग्ने ॥ त्वामग्नेऽअङ्गिरसोगुहाहित
मन्वविन्दञ्छिश्रियाणंवनेवने ॥ सजायसेमथ्यमानःसहोमहत्वा
माहुःसहसस्पुत्रमङ्गिरः २८ सखायः सम् ॥ सखायःसंवःसम्यञ्च

संहि. पू.अ.
१७ १६

अग्निषु॑ स्तोम॑मग्न॒ये॑ ॥ वर्षिष्ठायक्षितीनामूर्जोनप्त्रेसहस्वते २९ सऽसुमित् ॥ सऽसुमिद्युवसेवृषन्नग्नेविश्वान्यर्य्यऽआ ॥ इडस्पदे समिद्ध्यसेसनोवसून्याभर ३० त्वामग्नेमन्नश्रवस्तमु ॥ हवन्तेविक्षु जन्तवः ॥ शोचिष्केशम्पुरुप्रियाग्नेहव्यायवोढवे ३१ एनावः ॥ एनावोऽअग्निन्नमसोर्जोनपातमाहुवे ॥ प्रियञ्चेतिष्ठमरतिऽस्वध्वरंविश्वस्यदूतममृतम् ३२ विश्वस्यदूतम् ॥ विश्वस्यदूतममृतंविश्वस्यदूतममृतम् ॥ सयोजतेऽअरुषाविश्वभोजसासदुद्रवत्स्वाहुतः ३३ सदुद्रवत् ॥ सदुद्रवत्स्वाहुतःसदुद्रवत्स्वाहुतः ॥ सुब्रह्मायज्ञः सुशमीवसूनान्देवऽराधोजनानाम् ३४ अग्नेवाजस्य ॥ अग्नेवा

१७

जंस्युगोमंतुऽईशानःसहसोयहो ॥ अस्मेधेहिजातवेदोमहिश्रवंः
३५ सऽइंधानः ॥ सऽइंधानोवसुष्कविरग्निरीडेन्योगिरा ॥ रेवदस्मभ्
भ्यंम्पुर्वणीकदीदिहि ३६ क्षपोराजन् ॥ क्षपोराजन्नुतत्मनाग्ने
वस्तोरुतोषसंः ॥ सतिग्मजम्भरक्षसोदहप्प्रति ३७ भद्रोनंः ॥ भ
द्रोनोऽअग्निराहुतोभद्रारातिःसुभगभद्रोऽअध्वरः ॥ भद्राऽउतप्प्रशं
स्तयः ३८ भद्राऽउत ॥ प्प्रशंस्तयोभद्रम्मनंःकृणुष्ववृत्रतूर्य्ये ॥ ये
नासमत्सुसासहंः ३९ येनासमत्सु ॥ सासहोवस्थिरातनुहिभूरिश
र्द्धताम् ॥ वनेमातेऽअभिष्टिभिः ४० अग्निन्तम् ॥ अग्निन्तम्मं
न्येयोवसुरस्तंयंयन्तिधेनवंः ॥ अस्तमर्वन्तऽआशवोस्तन्नित्यां

सोम्राजिनुऽइषंᳬस्तोतृभ्युऽआभंर ४१ सोऽअग्नि ॥ सोऽअ
ग्निरुर्यौवसुंर्गृणेसंयमायन्तिधेनवंः ॥ समर्वन्तोरघुद्रुवंःसर्ᳬसुंजा
तासंःसूरयुऽइषंᳬस्तोतृभ्युऽआभंर ४२ उभेसुंश्चन्द्र ॥ सुर्पिषो
दर्वींश्रीणीषऽआसनिं ॥ उतोनुऽउत्पुंपूर्याऽउक्थेषुंशवसस्पतुऽइ
षंᳬस्तोतृभ्युऽआभंर ४३ अग्नेतम् ॥ अग्नेतमुद्याश्वन्नस्तोमैंः
क्रतुन्नभुद्रᳬहृंदिस्पृशंम् ॥ ऋुध्यामांतुऽओहैंः ४४ अधाहि ॥ अधा
ह्यग्नेक्रतोंर्भुद्रस्युदक्षंस्यसाधोः ॥ रुथीर्ऋुतस्यंबृहुतोबुभूथं ४५
एुभिर्नंः ॥ एुभिर्नोऽअुर्कैर्भवांनोऽअुर्वाङ्क्स्वुर्णज्योतिंः ॥ अग्नेवि
श्वेंभिःसुमनाऽअनींकैः ४६ अुग्निᳬहोतांरम् ॥ अुग्निᳬहोतांर

म्मन्न्येदास्वन्तुंव्वसुᳪसूनुᳪसहंसोजातवेदसंव्विप्प्रन्नजातवेदसम्॥ स

ऽऊर्द्ध्वयांस्वद्धूरोदेवोदेवाद्ध्यांकृपा॥ घृतस्यविभ्भाष्टिमनुवष्टिशोचि

षाजुह्वानस्यसर्प्पिषः॥४७ अग्नेत्वम्॥ अग्नेत्वन्नोऽअन्तमऽउतत्त्राता

शिवोभवावरूथ्यः॥ वसुरग्निर्व्वसुश्श्रवाऽअच्छानक्षिद्युमत्तमᳪरयि

न्दाः॥ तन्त्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्भ्यः॥४८[२१]

येनऽऋषयः॥ येनऽऋषयस्तपसासत्त्रमायन्निन्धानाऽअग्निᳪस्वः

राभरन्तः॥ तस्मिन्नहन्निदधेनाकेऽअग्निंयमाहुर्म्मनवस्तीर्णवर्हि

षम्॥४९ तम्पत्नीभिः॥ तम्पत्नीभिरनुगच्छेमदेवाःपुत्त्रैर्भ्भातृभिरु

तवाहिरण्ण्यैः॥ नाकङ्गृभ्णानाःसुकृतस्यलोकेतृतीयेपृष्ठेऽअधिरो

चुनेदिवः ५० आवाचः ॥ आवाचोमद्ध्यंमरुहद्धुरण्युरयमुग्निः
सत्पतिश्चेकितानः ॥ पृष्ठेपृथिव्यानिहितोदविद्युतदधस्पदङ्कृणुतांस्ये
पृतन्यवंः ५१ अयमुग्निः ॥ अयमुग्निर्वीरतमोवयोधाःसहस्रि
योद्योततामप्रयुच्छन् ॥ विभ्राजमानःसरिरस्यमद्ध्यऽउपप्रयाहि
दिव्यानिधामं ५२ सम्प्रच्यवद्ध्वमुपं ॥सम्प्रयाताग्नेपथोदेवयानांन्कृ
णुद्ध्वम् ॥ पुनंःकृण्वानापितरायुवानान्वाताꣳसीत्वयितन्तुमेतम्
५३ उद्बुद्ध्यस्व ॥ उद्बुद्ध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्त्तेसꣳसृजे
थामयञ्च ॥ अस्मिन्त्सधस्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवायजमा
नश्चसीदत ५४ येनुवहसि ॥ सहस्रंयेनाग्नेसर्ववेदसम् ॥ तेनेमं

रुस्युज्ञन्नोनयुस्वर्द्देवेषुगन्तवे ५५ अयन्तौ ॥ अयन्तेयोनिर्ऋृत्वियोय
तोजातोऽअरोचथाः ॥ तञ्जानन्नग्नऽआरोहाथानोवर्द्धयारयिम् ॥ ५६
[ ८ ] तपश्च ॥ तपश्चतपस्यश्चशैशिरावृतूऽअग्नेरन्तःश्लेषोसि
कल्पेतान्द्यावापृथिवीकल्पन्तामापऽओषधयः कल्पन्तामग्न
यः पृथङ्ममज्ज्यैष्ठ्यायसव्रताः ॥ येऽअग्नयः समनसोन्तराद्यावापृ
थिवीऽइमे ॥ शैशिरावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसं
विशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ५७ परमेष्ठीत्त्वा ॥ सादय
तुदिवस्पृष्ठेज्ज्योतिष्मतीम् ॥ विश्वस्मैप्राणायापानायव्यानाय
विश्वञ्ज्योतिर्यच्छ ॥ सूर्य्यस्तेधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रुवासी

द ५८ लोकम्पृंण ॥ द्धिद्वंम्पुणाथोंसीदद्धुवात्वम् ॥ इन्द्राग्नीत्वाबृ
हस्पतिंरुस्म्मिन्न्योनांवसीषदन् ५९ ताऽअंस्य ॥ सूददोहसुःसोमंꣳ
श्रीणन्तिपृश्नंयः॥जन्मंन्देवानांविशंस्त्रिष्ष्वारोचुनेदिवः ६० इन्द्रंवि
श्श्वाः॥इन्द्रंविश्श्वांऽअवीवृधन्त्समुद्रव्यंचसुङ्गिरंः॥रथीतंमꣳरथीनां
वाजांनाꣳसत्पंतिम्पतिम् ६१ प्रोथुदश्वं॥प्रोथुदश्श्वोनयवंसेविष्ष्य
न्न्युदामुहःसुंवरंणाद्धूयस्त्थांत् ॥ आदंस्यवातोऽअनुंवातिशोचिरधं
स्म्मतेव्रजंनकृष्णमंस्ति ॥ ६२ ॥ आयोष्ट्वा ॥ आयोष्ट्वासदंनेसाद
याम्म्यवंतश्छायायांꣳसमुद्रस्यहृदंये ॥ रश्म्मीवतीम्भास्वंतीमाया
द्याम्भास्यापृथिवीमोर्व्वन्तरिक्षम् ६३ परमेष्ठीत्वा ॥ सादयतुदिवस्पृ

ष्ठेद्भ्यचंस्वर्तीम्म्प्रथंस्वर्तीन्दिवंरुघ्र्घ्ह्राद्दिवंन्द्दंह्हदिवुम्माहिंसीः ॥ वि
श्श्वंस्म्मैप्प्राणायांपानायंव्व्यानायौंदानायंप्प्रतिष्ठायैंचरित्रांय ॥ सू
र्यस्त्वाभिपांतुमुह्यास्वस्त्याछर्दिषाशन्तंमेनतयांदेवतंयाङ्गिरस्व
द्ध्रुवेसींदतम् ६४ सुहस्रंस्यप्प्रमा॥सिसुहस्रस्यप्प्रतिमासिसुहस्रस्यो
न्न्मासिसाहस्रोसिसुहस्रांयत्त्वा ६५ [ १ ] इतिसंहितापाठेपंचदशो
ध्यायः ॥ १५ ॥ नमस्तेषोडशहिरण्यबाहवऽउष्णीषिणेतक्षभ्योज्ये
ष्ठायपंचकाःस्तुत्यायचतस्रःशंभवायैकापार्यायपंचद्रापेअंधसोवि६
शतिर्नवषट्षष्टिः ॥ नमस्ते ॥ नमंस्तेरुद्रमुन्न्यवंऽउतोतंइषंवेनमंः ॥
बाहुभ्यामुततेनमंः १ यातें ॥ रुद्रशिवातनूरघोरापापकाशिनी॥ त

यांनस्तुन्वाशन्तंमयागिरिंशन्तुभिचांकशीहि २ यामिषुम् ॥ या
मिषुङ्गिरिशन्तुहस्तैबिभर्ष्यस्तंवे ॥ शिवाङ्गिरित्रुताङ्कुरुमाहिंᳬसीःपु
रुषञ्जगंत् ३ शिवेनुवचंसा ॥ त्वागिरिशाच्छांवदामसि॥यथांनुःस
र्वमिज्जगंदयुक्ष्मᳬसुमनुाऽअसंत् ४ अध्यंवोचत् ॥ अध्यंवोचदधि
वुक्ताप्रंथुमोदैव्योंभिुषक् ॥ अहीँश्चुसर्वांजुम्भयुन्त्सर्वांश्चयातुधा
न्योधुराचीःपरांसुव ५ अुसौयः ॥ अुसौयस्तुाम्रोऽअंरुणऽउुतब
भ्रुःसुंमङ्गलंः ॥ येचैनᳬरुुद्राऽअुभितोंदिक्षुश्रिताःसंहस्रुशोवैषाᳬहे
डऽईमहे ६ अुसौयः ॥ अुसौयोंवुसर्प्पंतिुनीलंग्ग्रीवोुविलोंहितः ॥
उुतैनंङ्गोपाऽअंदृश्श्रुन्नदृश्श्रनुदहार्य्यः सदृष्टोमृंडयातिनः ७ नमों

स्तु ॥ नमोस्तुनीलग्ग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेऽअस्यस
त्वानोहन्तेभ्योकरन्नमं÷ ८ प्रमुंञ्च ॥ प्रमुंञ्चधन्वंनुस्त्वमुभयोरा
त्न्योर्ज्ज्याम् ॥ याश्चंतेहस्तऽइषंवुःपराताभगवोवप ९ विज्ज्यन्ध
नुं÷ ॥ कपर्द्दिनोविशंल्ल्योबाणंवाः ॥ उत ॥ अनैशन्नस्युयाऽइषंवऽआ
भुरंस्यनिषङ्गधिः १० याते ॥ हेतिर्म्मीढुष्टमहस्तेबभूवंतेधनुः ॥ त
यास्म्मान्विश्श्वतस्त्वमयक्ष्म्मयापरिंभुज ११ परिंते ॥ परिंतेधन्व
नोहेतिरस्म्मान्वृणक्कुविश्श्वतं÷ ॥ अथोयऽइषुधिस्तवारेऽअस्म्मन्नि
धेहितम् १२ अवतत्यधनुं÷ ॥ अवतत्यधनुष्ट्वंसहस्राक्षशतेषुधे ॥
निशीर्य्यंशल्ल्यानाम्मुखांशिवोनं÷सुमनांभव १३ नमंस्ते ॥ नमंस्तु

ऽआयुंधायानांततायधृष्णवें ॥ उभाब्भ्यांमुततेनमोंबाहुब्भ्यान्त
वधन्वंने १४ मानं÷ ॥ मानोंमुहान्तंमुतमानोंऽअर्ब्भकम्मानऽउक्षं
न्तमुतमानंऽउक्षितम् ॥ मानोंव्वधीःपितरम्मोतमातरम्मानं÷ प्प्रिया
स्तन्वोरुद्द्ररीरिषः १५ मानंस्तोके ॥ तनंयेमानऽआयुंषिमानोगोषु
मानोऽअश्श्वेंषुरीरिषः ॥ मानोंव्वीरान्त्रुंद्द्रभामिनोंव्वधीर्हविष्म्मन्तः
सदमित्त्वांहवामहे १६ [ १६ ] शतम ८०० नमोहिरंण्ण्यबाहवे ॥
सेनान्न्येदिशाञ्चपतंयेनमोनमोंव्वृक्षेब्भ्योहरिंकेशेब्भ्यःपशूनाम्पतये
नमोनमं÷ शष्प्पिञ्जंरायत्त्विषींमतेपथीनाम्पतंयेनमोनमोहरिंकेशा
योपवीतिनेंपुष्टानाम्पतंयेनमोनमोंबब्भ्लुशायं १७नमोंबब्भ्लुशायं ॥

व्याधिनेन्नानाम्पतयेनमोनमोभुवस्यंहेत्यैजगताम्पतयेनमोनमो
रुद्रायाततायिनेक्षेत्राणाम्पतयेनमोनमः सूतायाहन्त्यैवनानाम्पतये
नमोनमोरोहिताय॥१८॥नमोरोहिताय ॥ स्थपतयेवृक्षाणाम्पतये
नमोनमोभुवन्तयेवारिवस्कृतायौषधीनाम्पतयेनमोनमोमन्त्रिणेवा
णिजायकक्षाणाम्पतयेनमोनमऽउच्चैर्घोषायाक्रन्दयतेपत्तीनाम्प
तयेनमोनमः कृत्स्नायतया १९ नमः कृत्स्नायतया ॥ धावतेसत्त्व
नाम्पतयेनमोनमः सहमानायनिव्याधिनऽआव्याधिनीनाम्पतयेन
मोनमोनिषङ्गिणेककुभायस्तेनानाम्पतयेनमोनमोनिचेरवेपरिच
रायारण्यानाम्पतयेनमोनमोवञ्चते २० नमोवञ्चते ॥ परिवञ्च

संहि. पू.अ.
१०३ १६

तेस्तायूनाम्पतयेनमोनमोनिषङ्गिणं ऽइषुधिमतेतस्कराणाम्पतयेन
मोनमः सृकायिभ्योजिघांसद्भ्योमुष्णताम्पतयेनमोनमोसिम
द्भ्योनक्तञ्चरद्भ्योविकृन्तानाम्पतयेनमः २१ [५] नमऽउष्णीषि
णे ॥ गिरिचरायकुलुञ्चानाम्पतयेनमोनमऽइषुमद्भ्योधन्वायिभ्य
श्चवोनमोनमऽआतन्वानेभ्यः प्रतिदधानेभ्यश्चवोनमोनम
ऽआयच्छद्भ्योस्यद्भ्यश्चवोनमोनमोविसृजद्भ्यः २२ नमोविसृज
द्भ्योविध्यद्भ्यश्चवोनमोनमः स्वपद्भ्योजाग्रद्भ्यश्चवोनमोनमः श
यानेभ्यऽआसीनेभ्यश्चवोनमोनमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमो
नमः सभाभ्यः २३ नमः सभाभ्यः ॥ सभापतिभ्यश्चवोनमोन

१०३

मोऽश्वेभ्योऽश्वपतिभ्यश्चवोनमोनमऽआव्याधिनीभ्योविवि
ध्यन्तीभ्यश्चवोनमोनमऽउगणाभ्यस्तृꣳहतीभ्यश्चवोनमोनमो
गणेभ्यः २४ नमोगणेभ्यो॥ गणपतिभ्यश्चवोनमोनमोव्रातेभ्यो
व्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोन
मोविरूपेभ्योविश्वरूपेभ्यश्चवोनमोनमः सेनाभ्यः २५ नमः
सेनाभ्यः॥ सेनानिभ्यश्चवोनमोनमोरथिभ्योऽअरथेभ्यश्च
वोनमोनमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्चवोनमोनमोमहद्भ्योऽअर्भके
भ्यश्चवोनमः २६ [ ५ ] नमस्तक्षभ्यः॥ नमस्तक्षभ्योरथका
रेभ्यश्चवोनमोनमः कुलालेभ्यः कर्मारेभ्यश्चवोनमोनमोनिषा

देभ्यःपुञ्जिष्ठेभ्यश्चवोनमोनमःश्वनिभ्योमृगयुभ्यश्चवोन
मोनमःश्वभ्यः २७ नमःश्वभ्यःश्वपतिभ्यश्चवोनमोनमोभ
वायचरुद्रायचनमःशर्वायचपशुपतयेचनमोनीलग्रीवायचशितिक
ण्ठायचनमःकपर्दिने २८ नमःकपर्दिने ॥ चव्युप्तकेशायचनमः
सहस्राक्षायचशतधन्वनेचनमोगिरिशयायचशिपिविष्टायचनमो
मीढुष्टमायचेषुमतेचनमोह्रस्वाय २९ नमोह्रस्वाय ॥ चवामना
यचनमोबृहतेचवर्षीयसेचनमोवृद्धायचसवृधेचनमोग्र्यायचप्रथ
मायचनमऽआशवे ३० नमऽआशवे ॥ चाजिरायचनमःशीघ्र्या
यचशीभ्यायचनमऽऊर्म्यायचावस्वन्यायचनमोनादेयायचद्वी

प्प्यायच ३१ [५] नमोज्ज्येष्ठाय ॥ चकनिष्ठायचनमः पूर्वजाय
चापरजायचनमोमद्ध्यमायचापगल्भायचनमोजघन्न्यायचबु
द्ध्न्यायचनमःसोभ्याय ३२ नमःसोभ्याय ॥ चप्प्रतिसर्य्याय
चनमोयाम्म्यायचक्षेम्म्यायचनमःश्श्लोक्क्यायचावसान्न्यायचन
मऽउर्व्वर्य्यायचखल्ल्यायचनमोवन्न्याय ३३ नमोवन्न्याय ॥ चक
क्ष्यायचनमःश्श्रवायचप्प्रतिश्श्रवायचनमऽआशुषेणायचाशुरथा
यचनमःशूरायचावभेदिनेचनमोबिल्म्मिने ३४ नमोबिल्म्मिनेच
कवचिनेचनमोवर्म्मिणेचवरूथिनेचनमः श्श्रुतायचश्श्रुतसेनाय
चनमोदुन्दुभ्यायचाहनन्न्यायचनमोधृष्णवे ३५ नमोधृष्णवे ॥

च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने
च नमः स्वायुधाय च सुधन्वने च ३६ [५] नमः स्रुत्याय ॥ च प
थ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च सरस्याय च
नमो नादेयाय च वैशन्ताय च नमः कूप्याय ३७ नमः कूप्याय ॥
चावट्याय च नमो वीध्र्याय चातप्याय च नमो मेघ्याय च विद्युत्या
य च नमो वर्ष्याय चावर्ष्याय च नमो वात्याय ३८ नमो वात्याय ॥
च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः सोमाय च रुद्राय
च नमस्ताम्राय चारुणाय च नमः शङ्गवे ३९ नमः शङ्गवे ॥ च पशुप
तये च नम ऽउग्राय च भीमाय च नमोऽग्रेवधाय च दूरेवधाय च नमो ह

न्तेहेचनीयसेचनमोवृक्षेभ्योहरिकेशेभ्योनमस्ताराय ४० [८] न
मःशम्भवाय ॥ चमयोभवायचनमःशङ्करायचमयस्करायचनमः
शिवायचशिवतरायच ४१ [९] नमःपार्याय ॥ चावार्यायच
नमः प्रतरणायचोत्तरणायचनमस्तीर्थ्यायचकूल्यायचनमः श
ष्प्यायचफेन्यायचनमःसिकत्याय ४२ नमःसिकत्याय ॥ चप्र
वाह्यायचनमःकिꣳशिलायचक्षयणायचनमः कपर्दिनेचपुलस्त
येचनमःइरिण्यायचप्रपथ्यायचनमोव्रज्याय ४३ नमोव्रज्या
य ॥ चगोष्ठ्यायचनमस्तल्प्यायचगेह्यायचनमोहृदय्यायचनिवे
ष्प्यायचनमःकाट्यायचगह्वरेष्ठायचनमःशुष्क्याय ४४ नमःशु

संहि.　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　पू.अ.

१०६　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　　१६

ष्कय्याय ॥ चहस्त्यायचनमःपांसव्यायचरजस्यायचनमोलो
प्प्यायचोलप्प्यायचनमऽऊर्व्यायचसूर्व्यायचनमःपर्ण्णाय ४५ न
मःपर्ण्णाय ॥ चपर्ण्णशदायचनमऽउद्गुरमाणायचाभिघ्नतेचनमः
ऽआखिदतेचप्प्रखिदतेचनमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमोनमो
वःकिरिकेभ्योदेवानाᳬहृदयेभ्योनमोविचिन्वत्केभ्योनमोविक्षि
णत्केभ्योनमऽआनिर्हतेभ्यः ४६ [ ५ ] द्रापेऽअन्धसः ॥ द्रापे
ऽअन्धसस्प्पतेदरिद्रनीललोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्मा
भेर्म्मारोङ्मोचनःकिञ्चनाममत् ४७ इमारुद्राय ॥ तवसेकपर्दिने
क्षयद्वीरायप्प्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वम्पु

१०६

ष्टङ्गामेऽअस्मिन्न्ननातुरम् ४८ यातें ॥ रुद्रशिवातनूःशिवाविश्वा
हाभेषजी ॥ शिवारुतस्यंभेषजीतयानोमृडजीवसें ४९ परिनः ॥प
रिनोरुद्रस्यंहेतिर्वृणक्तुपरित्वेषस्यंदुर्म्मतिरघायोः ॥ अवंस्थिरामघ
वं द्भ्यस्तनुष्वमीढ्वस्तोकायतनंयायमृड ५० मीढुष्टमशिवंतम ॥ शि
वोनंःसुमनाभव ॥ परमेवृक्षऽआयुधन्निधायकृत्तिंवसानऽआचंर
पिनाकम्बिभ्रदागंहि ५१ विकिरिद्रविलोहित ॥ नमस्तेऽअस्तुभ
गवः ॥ यास्तेंसहस्रंहेतयोन्यमस्मन्निवंपन्तुताः ५२ सहस्राणि
सहस्रशः ॥ सहस्राणिसहस्रशोबाह्वोस्तवंहेतयंः ॥ तासामीशानोभ
गवःपराचीनामुखाकृधि ५३ असंङ्ख्यातासहस्राणि ॥ येरुद्राऽअ

संहि. धिभूम्म्याम् ॥ तेषांᳫंसहस्रयोजनेवधन्न्वानितन्मसि ५४ अस्मि पु.अ.

१०७ न्महति ॥ अस्मिन्महत्यर्ण्णवेन्तरिक्षेभवाऽअधि ॥ तेषांᳫंसहस्र १६

योजनेवधन्न्वानितन्मसि ५५ नीलग्ग्रीवाःशितिकण्ठाः ॥ नील

ग्ग्रीवाःशितिकण्ठादिवᳫंरुद्राऽउपश्श्रिताः ॥ तेषांᳫंसहस्रयोजनेव

धन्न्वानितन्मसि ५६ नीलग्ग्रीवाःशितिकण्ठाः ॥ शर्वाऽअधःक्षमा

चराः ॥ तेषांᳫंसहस्रयोजनेवधन्न्वानितन्मसि ५७ येवृक्षेषु ॥ शु

ष्पिञ्जरानीलग्ग्रीवाविलोहिताः ॥ तेषांᳫंसहस्रयोजनेवधन्न्वानि

तन्मसि ५८ येभूतानाम् ॥ येभूतानामधिपतयोविशिखासःकप १०७

र्द्दिनः ॥ तेषांᳫंसहस्रयोजनेवधन्न्वानितन्मसि ५९ येपथाम् ॥ ये

पथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः ॥ तेषाᳪंसहस्रयोजनेवध
न्वानितन्मसि ६० येतीर्थानिप्प्रचरन्तिसृकाहस्तानिषङ्गिणः ॥
तेषाᳪंसहस्रयोजनेवधन्वानितन्मसि ६१ येन्नेषु ॥ विविध्यन्ति
पात्रेषुपिबतोजनान् ॥ तेषाᳪंसहस्रयोजनेवधन्वानितन्मसि ६२
यऽएतावन्तः ॥ यऽएतावन्तश्चभूयाᳪंसश्चदिशोरुद्राव्वितस्थिरे ॥
तेषाᳪंसहस्रयोजनेवधन्वानितन्मसि ६३ नमोस्तु ॥ रुद्रेभ्योयेदि
विषेषांव्वर्षमिषवः ॥ तेभ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशो
दीचीर्दशोर्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्वि
ष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ६४ नमोस्तु ॥ रुद्रेभ्योयेन्त

रिक्षेयेषांवातऽइषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्द
शोदीचीर्दशोर्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्वि
ष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ६५ नमोस्तु ॥ रुद्रेभ्योयेपृथि
व्यांयेषामन्नमिषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्द
शोदीचीर्दशोर्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्वि
ष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ६६ [ २० ] इतिवाजसनेय
संहितायांदीर्घपाठेषोडशोध्याय १६ अश्मन्नूर्जंदशनमस्तेपंचाग्नि
स्तिग्मेननवचक्षुषःपिताष्टावाशुःशिशानःसप्तदशोदेनंक्रमध्वमग्निना
पंचदशकौशुक्रज्योतिःसप्तेमंस्तनंत्रयोदशनवैकोनशतं ॥ अश्मन्

न्नूर्जम्॥ अश्मन्नूर्जम्पर्वते शिश्रियाणामद्भ्यऽओषधीभ्यो वनस्प
तिभ्योऽअधि सम्भृतम्पयः ॥ तान्नऽइषमूर्जन्धत्त मरुतः सᳫँरराणा
ऽअश्मᳫँस्ते क्षुन्मयि तऽऊर्ग्यन्द्विष्मस्तन्ते शुगृच्छतु १ इमा मे॥ अग्नऽ
इष्टका धेनवः सन्त्वेका च दश च दश च शतञ्च शतञ्च सहस्रञ्च सहस्रञ्चायु
तञ्चायुतञ्च नियुतञ्च नियुतञ्च प्रयुतञ्चार्बुदञ्च न्यर्बुदञ्च समुद्रश्च मध्य
ञ्चान्तश्च परार्द्धश्चैता मेऽअग्नऽइष्टका धेनवः सन्त्वमुत्रामुष्मिँल्लोके
२ ऋतवस्थ ॥ ऋतावृधऽऋतुष्ठास्थ ऋतावृधः ॥ घृतश्चुतो मधुश्चु
तो विराजो नाम कामदुघाऽअक्षीयमाणाः ३ समुद्रस्य त्वा ॥ समुद्र
स्य त्वावकयाग्ने परि व्ययामसि ॥ पावकोऽअस्मभ्यᳫँ शिवो भव ४

हिमस्यंत्वा ॥ जरायुणाग्ने परिंह्वयामसि ॥ पावकोऽअस्मभ्यंꣳ
शिवोभव ५ उपज्मन् ॥ उपज्मन्नुपवेतसेवतरनदीष्वा ॥ अग्नेपि
त्तमपामसिमण्डूकिताभिरागंहिसेमन्नोयज्ञम्पावकवर्णꣳशिवङ्कृ
धि ६ अपामिदम् ॥ अपामिदन्न्ययनꣳसमुद्रस्यनिवेशनम्॥अन्याँ
स्तेऽअस्मत्तपन्तुहेतयंः पावकोऽअस्मभ्यंꣳशिवोभव ७ अग्ने
पावक ॥ रोचिषामन्द्रयादेवजिह्वया ॥ आदेवान्वक्षियक्षिच ८ स
नः पावकदीदिवोग्नेदेवाः ...ऽइहावह ॥ उपयज्ञꣳहविश्चनः ९
पावकयायः ॥ पावकयायश्चितयन्त्याकृपाक्षामन्नुरुचऽउषसोन
भानुना ॥ तूर्वन्नयामन्नेतशस्यनूरणऽआयोघृणेनततृषाणोऽअज

रं÷ १० [ १० ] नमस्ते ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्न्याँस्तेऽअस्म्मत्तपन्तुहेतयं ÷ पावको ऽअस्म्मभ्यंशिवोभव ११ नृषदेवेट् ॥ नृषदेवेड्प्सुषदेवेड्ढिंषदेवेड्वनसदेवेट्स्वर्विदेवेट् १२ येदेवाः ॥ येदेवादेवानाँयज्ञियायज्ञियानांसंवत्सरीणमुपभाग मासते ॥ अहुतादोहविषोयज्ञेऽअस्मिन्न्स्वयम्पिबन्तुमधुनोघृतस्य १३ येदेवाः । येदेवादेवेष्ष्वधिदेवत्वमायन्न्येब्रह्मणःपुरऽएतारोऽअस्य ॥ येभ्योनऽऋतेपवतेधामकिञ्चननतेदिवोनपृथिव्याऽअधिस्नुषु १४ प्राणदाअपानदाः ॥ प्राणदाऽअपानदाव्यानदावर्चोदावरिवोदाः ॥ अन्न्याँस्तेऽअस्म्मत्तपन्तुहेतयं ÷पावकोऽअस्म्मभ्यंशि

वोभव १५ [ ५ ] अग्निस्तिग्मेन ॥ शोचिषायासद्विश्श्वन्न्यत्रिणम् ॥ अग्निर्नोवनतेरयिम् १६ यऽइमा ॥ विश्श्वाभुवनानिजुह्वदृषिर्होतान्न्यसीदत्पितानः ॥ सऽआशिषाद्रविणमिच्छमानःप्रथमच्छदवराँ२ ॥ आविवेश १७ किꣳस्वित् ॥ किꣳस्विदासीदधिष्ठानमारम्भणङ्कतमत्स्वित्कथासीत् ॥ यतोभूमिञ्जनयन्विश्श्वकर्म्माविद्यामौर्णोन्महिनाविश्श्वचक्षाः १८ विश्श्वतश्चक्षुरुत ॥ विश्श्वतोमुखोविश्श्वतोबाहुरुत विश्श्वतस्पात् ॥ सम्बाहुभ्याम्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः १९ किꣳस्वित् ॥ किꣳस्विद्वनङ्कऽउसवृक्षऽआसयतोद्यावापृथिवीनिष्टतक्षुः ॥ मनीषिणोमनसा

पृच्छतेदुतद्यद्दुद्ध्यतिष्ठुद्भुवंनानिधारयंन् २० यातें ॥ यातेधामानिपर
माणियावुमायामंद्ध्युमाद्विंश्श्वकर्म्मन्नुतेमा ॥ शिक्षासखिंभ्योह
विषिंस्वधावःस्वुयंरुयंजस्वतुन्वंवृधानः २१ विश्श्वंकर्म्मन्हुविषा
॥वावृधानः स्वुयंरुयंजस्वपृथिवीमुतद्याम् ॥ मुह्यंन्त्वुन्येऽअभितः
सुपत्नाऽइहास्म्माकंम्मुघवासूरिरस्तु २२ वाचस्प्पतिम् ॥वाचस्प्प
तिंविश्श्वकंर्म्माणमूतयेंमनोजुवंवाजेंऽअद्याहुवेम ॥ सनोविश्श्वा
निहवंनानिजोषद्विश्श्वशंम्भूरवंसेसाधुकंर्म्मा २३ विश्श्वंकर्म्मन्ह
विषा ॥ वर्द्धनेनत्त्रातारमिन्द्रमकृणोरवुद्ध्यम् ॥ तस्म्मैविशःसमंनम
न्तपूर्व्वीरयमुग्ग्रोविहव्योयथासंत् २४ [ १ ] चक्षुषःपिता ॥ मनंसा

हिधीरोघृतमेनेऽअजनुन्नम्नमाने ॥ युदेदन्ताऽअदंहन्तपूर्वुऽआदि द्यावापृथिवीऽअंप्रथेताम् २५ विश्वकर्म्माविमनाः ॥ विश्वकं म्र्मार्विमनाऽआद्विहायाधाताविधातापरमोतसुन्दृक् ॥ तेषामिष्टा निसमिषामदन्तियत्रासप्तऽऋषीन्पर एकमाहुः २६ योनः ॥ पिता जनितायोविधाताधामानिवेदभुवनानिविश्वा ॥ योदेवानान्नाम धाऽएकऽएवतध्संम्प्रश्नम्भुवनायन्त्यन्या २७ तऽआयजन्तुद्रवि णध्समस्म्माऽऋषयःपूर्वेजरितारोनभूना ॥ असूर्त्तेसूर्त्तरजसिनिषु त्तेयेभूतानिसमकृण्वन्निमानि २८ परोदिवा ॥ परऽएनापृथिव्यापु रोदेवेभिरसुरैर्यदस्ति ॥ कध्स्विद्गर्भम्प्रथमन्दध्रऽआपोयत्रदेवाः

सुमपश्यन्तुपूर्वे २९ तमित् ॥ तमिद्गर्भम्प्रथमन्दध्रऽआपोयत्रदेवाः
सुमगच्छन्तुविश्वे ॥ अुजस्युनाभुावध्येकुमर्पितंयस्मिन्विश्वानिभुवनानितुस्थुः ३० नतम् ॥ नतंविदाथुयऽइमाजुजानान्यद्युष्माकुमन्तरम्बभूव ॥ नीहारेणप्रावृताजल्प्याचासुतृपऽउक्थुशासश्चरन्ति ३१ विश्वकर्माहि ॥ विश्वकर्माह्यजनिष्टदेवऽआदिद्गन्धर्वोऽअभवद्द्वितीयः ॥ तृतीयःपिताजनितौषधीनामपाङ्गर्भंव्यदधात्पुरुत्रा ३२ [ ८ ] आुशुःशिशानः ॥ आुशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषऽएकवीरःशुतंसेनाऽअजयत्साकमिन्द्रः ३३ सङ्क्रन्दनेनानिमिषेण ॥

संहि. ११२ | पू.अ. १७

जिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिन्द्रेणजयततत्सह
ध्वंयुधोनरऽइषुहस्तेनवृष्णा ३४ सऽइषुहस्तैः ॥ सऽइषुहस्तैःसनि
षङ्गिभिर्वशीसꣳस्रष्टासयुधऽइन्द्रोगणेन ॥ सꣳसृष्टजित्सोमपाबाहु
शर्द्ध्युग्रधन्वाप्रतिहिताभिरस्ता ३५ बृहस्पतेपरि ॥ दीयारथेनर
क्षोहामित्राꣳ ॥ ऽअपबाधमानः ॥ प्रभञ्जन्त्सेनाःप्रमृणोयुधाज
यन्नस्माकमेध्यवितारथानाम् ३६ बलविज्ञायस्थविरः ॥ बलवि
ज्ञायस्थविरःप्रवीरःसहस्वान्वाजीसहमानऽउग्रः ॥ अभिवीरो
ऽअभिसत्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित् ३७ गोत्रभिदङ्गोवि
दम् ॥ गोत्रभिदङ्गोविदंवज्रबाहुञ्जयन्तमज्मप्रमृणन्तमोजसा ॥

११२

इमᳪसंजाताऽअनुवीरयद्ध्वमिन्द्रᳪसखायोऽअनुसᳪरभद्ध्वम् ३८ अ
भिगोत्राणि ॥ अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरि
न्द्रः ॥ दुश्च्यवनःपृतनाषाडयुद्ध्योस्माकᳪसेनाऽअवतुप्रयुत्सु
३९ इन्द्रऽआसाम् ॥ इन्द्रऽआसान्नेताबृहस्पतिर्दक्षिणायज्ञःपुरऽएतु
सोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्ग्रम् ४०
इन्द्रस्यवृष्णः ॥ इन्द्रस्यवृष्णोवरुणस्यराज्ञऽआदित्यानाम्मरुता
ᳪशर्द्धऽउग्ग्रम् ॥ महामनसाम्भुवनच्यवानाङ्घोषोदेवानाञ्जयतामुद
स्थात् ४१ उद्धर्षय ॥ मघवन्नायुधान्युत्सत्वनाम्मामकानाम्मना
ᳪसि ॥ उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानाञ्जयताँय्यन्तुघोषाः ४२

अस्माकमिन्द्रः ॥ समृतेषुध्वजेष्वस्माकंजाऽइषवस्ताजयन्तु ॥ अस्माकंवीराऽउत्तरेभवन्त्वस्माः ॥ ऽउदेवाऽअवताहवेषु ४३ अमीषांचित्तम् ॥ अमीषांचित्तम्प्रतिलोभयन्तीगृहाणाङ्गान्यप्वेपरेहि ॥ अभिप्रेहिनिर्दहहृत्सुशोकैरन्धेनामित्रास्तमसासचन्ताम् ४४ अवसृष्टापरा ॥ पतशरव्येब्रह्मसंशिते॥गच्छामित्रान्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषः ४५ प्रेत ॥ प्रेताजयतानरऽइन्द्रोवःशर्म्मयच्छतु ॥ उग्रावःसन्तुबाहवोनाधृष्यायथासथ ४६ असौया ॥ सेनामरुतः परेषामभ्यैतिनओजसास्पर्द्धमाना ॥ ताङ्गूहततमसापव्रतेनयथामीऽअन्योऽअन्यन्नजानन् ४७ यत्रबाणाः ॥ सम्पतन्तिकुमाराविं

शिखाऽइंव ॥ तन्नुऽइन्द्रोबृहस्प्पतिरदितिः शर्म्मयच्छतुविश्श्वाहाशर्म्म
यच्छतु ४८ मर्म्माणिते ॥ मर्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वारा
जामृतेनानुवस्ताम् ॥ उरोर्वरीयोवरुणस्तेकृणोतुजयन्तन्त्वानुदेवा
मदन्तु ४९ [ १७ ] उदेनम् ॥ उदेनमुत्तरान्नयाग्नेघृतेनाहुत ॥ राय
स्प्पोषेणसᳬंसृजप्रजयाचबहुङ्कृधि ५० शतम् १०० इन्द्रेमम् ॥ इ
न्द्रेमम्प्रतरान्नयसजातानामसद्वशी ॥ समेनंवर्च्चसासृजदेवानाम्भा
गदाऽअसत् ५१ यस्यकुर्म्मः ॥ यस्यकुर्म्मोगृहेहविस्तमग्नेवर्द्धया
त्वम् ॥ तस्मैदेवाऽअधिब्रवन्नयञ्चब्रह्मणस्प्पतिः ५२ उदुत्वा ॥ उ
दुत्वाविश्श्वेदेवाऽअग्नेभरन्तुचित्तिभिः ॥ सनोभवशिवस्त्वᳬंसुप्र

तींकोविभावसुः ५३ पश्चादिशः ॥ पश्चादिशोदैवीर्यज्ञमवन्तुदेवीर
पामतिन्दुर्म्मतिम्बाधमानाः ॥ रायस्पोषंयज्ञपतिमाभजन्तीराय
स्पोषेऽअधियज्ञोऽअस्थात् ५४ समिद्धेऽअग्नौ ॥ समिद्धेऽअग्नाव
धिमामहानऽउक्थपत्रऽईड्योगृभीतः॥तप्तङ्घर्म्मम्परिगृह्यायजन्तो
र्जायद्यज्ञमयजन्तदेवाः ५५ दैव्यायधर्त्रे । जोष्ट्रेदेवश्रीःश्रीमनाः
शतपयाः॥परिगृह्यदेवायज्ञमायन्देवादेवेभ्योऽअध्वर्यन्तोऽअस्थुः
५६ वीतंहविः॥ शमितंशमितायजध्यैतुरीयोयज्ञोयत्रहव्यमेति॥त
तोवाकाऽआशिषोनोजुषन्ताम् ५७ सूर्यरश्मिर्हरिकेशः पुरस्तात्स
विताज्योतिरुदयाः ॥ अजस्रम् ॥ तस्यपूषाप्रसवेयातिविद्वान्स

म्पश्यन्विश्श्वाभुवनानिगोपाः ५८ विमानऽएषः ॥ विमानऽएष
दिवोमद्धचेऽआस्तऽआपप्प्रिवान्रोदसीऽअन्तरिक्षम् ॥ सविश्श्वा
चीरभिचष्टेघृताचीरन्तरापूर्व्वमपरञ्चकेतुम् ५९ उक्षासमुद्रः ॥ उक्षा
समुद्रोऽअरुणःसुपर्ण्णःपूर्व्वस्ययोनिम्पितुराविवेश ॥ मद्धयेदिवोनि
हितःपृश्निरश्म्माविचक्क्रमेरजसस्प्पात्यन्तौ ६० इन्द्रंविश्श्वाः ॥
इन्द्रंविश्श्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ॥ रथीतमंरथीनांवाजा
नाᳬसत्पतिम्पतिम् ६१ देवहूर्यज्ञः ॥ देवहूर्यज्ञऽआचवक्षत्सुम्नहू
र्यज्ञऽआचवक्षत् ॥ यक्षदग्निर्देवोदेवाः ॥ आचवक्षत् ६२ वाजस्य
मा ॥ प्प्रसवऽउद्ग्राभेणोदग्ग्रभीत् ॥ अधासपत्नानिन्द्रोमेनिग्ग्राभे

संहि. ११९ पू.अ. १७

णाधरा॑ः ॥ ऽअकः ६३ उदग्राभञ्च ॥ निग्राभञ्चब्रह्मदेवाऽअवीवृध
न् ॥ अधासुपत्नान्निन्द्राग्नीमेविषूचीनान्व्यस्यताम् ६४ [१५] क्र
मध्वमग्निना ॥ क्रमध्वमग्निनानाकमुख्यᳪहस्तेषुबिभ्रतः ॥ दिवस्पृ
ष्ठᳪस्वर्ग्गत्वामिश्राद्देवेभिराद्ध्वम् ६५ प्राचीमनु ॥ प्रदिशम्प्रेहिविद्वा
नग्नेरग्नेपुरोऽअग्निर्भवेह ॥ विश्वाऽआशादीद्यानोविभाह्यूर्ज्जन्नोधेहि
द्विपदेचतुष्पदे ६६ पृथिव्याऽअहम् ॥ पृथिव्याऽअहमुदन्तरिक्षमा
रुहमन्तरिक्षाद्दिवमारुहम् ॥ दिवोनाकस्यपृष्ठात्स्वर्ज्ज्योतिरगामहम् ६७
स्वर्यन्तः ॥ स्वर्यन्तोनापेक्षन्तऽआद्याᳪरोहन्तिरोदसी ॥ यज्ञंयेविश्व
तोधारᳪसुविद्वाᳪसोवितेनिरे ६८ अग्नेप्र ॥ अग्नेप्रेहिप्रथमोदेवय

११९

ताश्चक्षुर्देवानामुतमर्त्यानाम् ॥ इयंक्षमाणाभृगुभिःसुजोषाःस्वर्यं
न्तुयजमानाःस्वस्ति ६९ नक्तोषासा ॥ नक्तोषासासमनसाविरू
पेधापयेतेशिशुमेकᳪसमीची ॥ द्यावाक्षामारुक्मोऽअन्तर्विभातिदे
वाऽअग्निन्धारयन्द्रविणोदाः ७० अग्नेसहस्राक्ष ॥ शतमूर्द्धञ्छतन्ते
प्प्राणाःसहस्रंव्यानाः ॥ त्वᳪसाहस्रस्यरायऽईशिषेतस्मैतेविधेमवा
जायस्वाहा ७१ सुपर्णोसिगरुत्त्मान्पृष्ठेपृथिव्याःसीद ॥ भासान्तरि
क्षमापृणज्ज्योतिषादिवमुत्तभानतेजसादिशऽउद्दृᳪह ७२ आजुह्वानः
सुप्प्रतीकः ॥ पुरस्तादग्नेस्वंयोनिमासीदसाधुया ॥ अस्मिन्त्सध
स्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ७३ ताᳪसवितुः॥

ताꣳसवितुर्व्वरेण्यस्यचित्रामाहंवृणेसुमतिंविश्श्वजन्न्याम् ॥ यामं
स्यकण्ण्वोऽअदुहत्प्रपीनाꣳसहस्रधाराम्पयसामहीङ्गाम् ७४ विधे
मते ॥ परमेजन्मन्न्नग्नेविधेमस्तोमैरवरेसधस्थे ॥ यस्माद्योनेरुदा
रिथायजेतम्प्रत्वेहवीꣳषिजुहुरेसमिद्धे ७५ प्रेद्धोऽअग्ने ॥ प्रेद्धोऽअ
ग्नेदीदिहिपुरोनोजस्रयासूर्म्यायविष्ठ ॥ त्वाꣳशश्श्वन्तऽउपयन्ति
वाजाः ७६ अग्नेतम् ॥ अग्नेतमद्याश्श्वन्नस्तोमैःक्रतुन्नभद्रꣳहृ
दिस्पृशम् ॥ ऋद्ध्यामातऽओहैः ७७ चित्तिञ्जुहोमि ॥ चित्तिञ्जुहोमि
मनसाघृतेनयथादेवाऽइहागमन्न्वीतिहोत्राऽऋतावृधः ॥ पत्त्येविश्श्वं
स्यभूमनोजुहोमिविश्श्वकर्म्मणेविश्श्वाहादाभ्यꣳहविः ७८ सप्तते ॥

## ॥ संहितेचें शुद्धिपत्र ॥

| पत्रम् | पूर्वोत्तर पृष्ठपंक्तिः | अशुद्धम् | शुद्धम् | पत्रम् | पूर्वोत्तर पृष्ठपंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २ | उ० २ | णीर्द्ध्वं | णीत्ध्वं | ८ | उ० १ | या | यां |
| ३ | पू० ८ | ० | ह | ९ | उ० २ | रसि | रंसि |
| ” | पू० ९ | धांय | धायं | ” | उ० ३ | ङ्गृ | ङ्गृं |
| ” | उ० ५ | म्भु | म्भु | १० | पू० ३ | मोत्र्वं | मोंवं |
| ४ | उ० ८ | न्हि | न्हिु | १० | उ० १ | त्ति | ति |

शु. प.

| पृ. | पं. | अशुद्ध | शुद्ध |
|---|---|---|---|
| १२ | पू० ६ | स्था | स्थ |
| १७ | पू० १ | तैं | तं |
| १७ | पू० १ | हाव | हावि |
| २५ | उ० ४ | मा | ना |
| २७ | उ० ३ | न्हूं | न्हूं |
| २७ | उ० ७ | आरुं | आंरु |
| २८ | उ० ३ | ड्ड | ड्ड्र |
| " | उ० ९ | ऊ | र्ऊ |
| २९ | उ० ३ | ङ्गें | ङ्गुं |
| " | उ० ३ | त्रि | नि |
| ३० | पू० ५ | ॐ | ॐ॥ |
| ३२ | पू० ५ | र्न्नुं | र्न्नं |
| " | पू० ९ | द्वा | ह्वा |
| ३४ | पू० ८ | ष्टा | ष्ठा |
| ३४ | उ० २ | ग्र्यूणो | ग्र्युणो |
| ३५ | पू० ५ | ण्हा | ण्हु |
| " | पू० ६ | घै | घैं |
| ३९ | पू० २ | त्ते | त्तें |

१ १

| | | | | |
|---|---|---|---|---|
| ४० | पू० | ६ | स्रि | स्रु |
| " | " | " | न्द्रों | न्द्रौं |
| " | उ० | १ | जृ | जू |
| " | " | ४ | ० | थ्य |
| ४१ | उ० | ३ | ङ्घं | ङ्घ |
| " | उ० | ६ | नं | नं |
| ४२ | उ० | ५ | ष्वि | ष्वि |
| ४४ | पू० | ७ | षेत्तु | षत्ते |
| ४५ | पू० | ५ | ष्ट | ष्टु |
| ४६ | उ० | १ | न्त्यु | न्त्यु |
| " | उ० | ६ | ह्रो | ह्रो |
| ४७ | पू० | १ | ष्टु | ष्टु |
| ४८ | पू० | ६ | ज | जं |
| ५४ | उ० | ३ | त | तं |
| ५७ | उ० | ६ | ॥ | ० |
| ६१ | उ० | १ | ह्र | ह्न |
| ६३ | पू० | ५ | ङ्ग | ङ्गु |
| ६६ | पू० | ६ | न्दं | न्दे |

शु. २

| | | | | |
|---|---|---|---|---|
| ६७ | पू० | २ | क्थं | क्थुं |
| ६८ | पू० | १ | त्त्क्षमु | त्त्नु |
| ६९ | पू० | ४ | म | मं |
| ७१ | पू० | ४ | द्वं | द्वु |
| ” | ” | ५ | द्वं | द्वु |
| ७३ | पू० | ५ | स | य |
| ७६ | पू० | ४ | मा | मा |
| ७६ | उ० | ६ | द्वे | द्वे |
| ८० | उ० | १ | ने | ते |
| ” | ” | १ | सि | सिं |
| ८१ | पू० | ६ | ष्ट्व | ष्ट्वा |
| ८३ | पू० | १ | श्वाँ | श्वाँ |
| ” | ” | १ | ह्व | ह्व |
| ८८ | उ० | ६ | ष्ट्वा | ष्ट्वा |
| १०१ | उ० | ३ | य | स्र |
| १०३ | पू० | ६ | मः | मंः |
| १०८ | उ० | ६ | न्द्वि | न्द्वि |
| ११० | उ० | १ | न | म |

प. २

| | | | |
|---|---|---|---|
| १११ | उ० ८ | भ | भु |
| ११२ | पू० ६ | ह्वि | ह्विं |
| ११५ | उ० ५ | न्नों | न्नो |
| ११६ | उ० ३ | स्तौ | स्तो |
| ११७ | उ० २ | ज्ज्ये | ज्जे |
| १२४ | उ० ४ | षाड्ढ | षाड्डु |
| १२५ | पू० ३ | भ | भु |
| ” | ” ८ | ऊ | उ |
| १२६ | पू० २ | सू | सू |
| १२९ | उ० ७ | रुषो | रुष्ठो |
| ” | ” ९ | सेम्पा | सेमम्पा |
| १३१ | ” ४ | ष्टयं | ष्टय |
| १४१ | उ० २ | मी | मी |
| १४२ | पू० ४ | रुष | ठर्षं |
| १४३ | पू० ६ | दवीं | देवी |
| १४३ | उ० २ | वाः | वः |
| १४४ | पू० ९ | त्वा | त्वा |

शु. ३

प. ३

| पृष्ठ | भाग | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| २ | उ० | ४ | यादें | योंद |
| ३ | उ० | ८ | विन्द्रेषु | विरिन्द्रे |
| ८ | पू० | ३ | या | यां |
| ८ | उ० | ६ | द्दे | द्दु |
| १० | उ० | ९ | क्षा | क्षां |
| १३ | उ० | ४ | ञ्च्य | ञ्च्यै |
| " | " | ६ | हा | हु |
| २१ | उ० | १ | ङ्गिं | ङ्गि |
| २१ | उ० | ६ | त | ते |
| २४ | पू० | ५ | न्वसुं | न्वंसु |
| २६ | पू० | ७ | तिं | र्तिं |
| २६ | उ० | ९ | णे | णें |
| " | " | " | स | सं |
| ३१ | पू० | ४ | चु | र |
| " | पू० | ७ | तार्त्तु | त्ता |
| ३१ | उ० | ९ | गु | गं |
| ४० | पू० | २ | साक्षि | सेत्रि |
| ४१ | " | " | ० | वत्सरों |

| | | | |
|---|---|---|---|
| ४१ | उ० ४ | षरां | पंरा |
| ४३ | उ० ९ | मर्दं | मंद् |
| ४४ | उ० ९ | हृयंच | हृयचं |
| ४७ | पू० ९ | त | त्त |
| ५० | उ० १ | ता | ना |
| ५५ | पू० ३ | र्म्मा | र्म्मां |
| ५७ | पू० ५ | ह्यू | ह्षू |
| ५८ | उ० ७ | रु | रेु |
| ५९ | उ० ३ | ष | य |
| ६२ | पू० ६ | न्ते | न्तेु |
| ६४ | उ० ३ | शूं | शुं |
| ६७ | उ० ५ | म्म | र्म्म |
| ७० | पू० ९ | स | सू |
| ७२ | उ० ४ | व | ब |
| ७४ | उ० ५ | न्त्वे | त्वे |
| ७६ | उ० ६ | थांस | थासं |
| ७७ | उ० १ | घ्रं | घं |
| ८० | पू० ४ | भो | भ्रो |

| शु॰ | | | | | | | | | | प॰ |
|---|---|---|---|---|---|---|---|---|---|---|
| २ | उ॰ | ४ | यादै | योंद | २४ | पू॰ | ५ | न्त्वसुं | न्त्वंसु | |
| ३ | उ॰ | ८ | विन्द्रेष्ठु | विरिन्द्रे | २६ | पू॰ | ७ | र्ति | र्ति | |
| ८ | पू॰ | ३ | या | यां | २६ | उ॰ | ९ | णे | णें | |
| ८ | उ॰ | ६ | दे | द्दे | ,, | ,, | ,, | स | सं | |
| १० | उ॰ | ९ | क्षा | क्षां | ३१ | पू॰ | ४ | चु | च | |
| १३ | उ॰ | ४ | च्च्य | च्च्यै | ,, | पू॰ | ७ | ता:र्त्तु | र्त्तुता | |
| ,, | | ,, | ६ | हा | हु | ३१ | उ॰ | ९ | गु | गं |
| २१ | उ॰ | १ | ङ्गि | ङ्गि | ४० | पू॰ | २ | साक्षि | सेत्रि | |
| २१ | उ॰ | ६ | त | ते | ४१ | ,, | ,, | ० | वत्सुरोसि | |

३ ३

| | | | | |
|---|---|---|---|---|
| ४१ | उ० | ४ | षरां | पंरा |
| ४३ | उ० | ९ | मदं | मंद |
| ४४ | उ० | ९ | ह्र्यंच | ह्र्यचं |
| ४७ | पू० | ९ | त | त्त |
| ५० | उ० | १ | ता | ना |
| ५५ | पू० | ३ | र्म्मा | र्म्मां |
| ५७ | पू० | ५ | ह्य | ह्सृ |
| ५८ | उ० | ७ | रु | रे |
| ५९ | उ० | ३ | स | य |

| | | | | |
|---|---|---|---|---|
| ६२ | पू० | ६ | न्ते | न्ते |
| ६४ | उ० | ३ | शूं | शुं |
| ६७ | उ० | ५ | म्म | र्म्म |
| ७० | पू० | ९ | स | सू |
| ७२ | उ० | ४ | व | ब |
| ७४ | उ० | ५ | न्त्वे | त्वे |
| ७६ | उ० | ६ | थांस | थासं |
| ७७ | उ० | १ | घं | घं |
| ८० | पू० | ४ | न्नो | न्नो |

| | | | | |
|---|---|---|---|---|
| ८६ | पू० | १ | व | वं |
| ८६ | उ० | १ | क्षें | क्षे |
| ८८ | उ० | ५ | क्री | क्रीं |
| ८९ | उ० | ५ | स्र्यौं | स्र्यां |
| ९० | पू० | २ | ह्यु | ह्यु |
| ,, | ,, | ६ | मः | मुः |
| ९१ | पू० | २ | ॐ३ | ॐ |

## पुस्तकामिलनेका ठिकाना

मुंबई-रामवाडी, हरिप्रसाद भगीरथ पुस्तकालय
और पंडित जेष्ठाराम मुकुंदजी पुस्तकालय
प्रयाग॰मकरकेमेलेमें, हनुमानदास
ब्रजवल्लभकी दुकानपर.

ऽअग्नेसुमिधंःसुप्तजिह्वाः सुप्तऽऋषंयःसुप्तधामंप्प्रियाणि ॥
सुप्तहोत्रांःसुप्तधात्वांयजान्तिसुप्तयोनीरापृणस्वघृतेनुस्वाहा ७९
[ १५ ] शुक्रज्ज्योतिश्च ॥चित्रज्ज्योतिश्चसुत्यज्ज्योतिश्चुज्ज्योति
ष्मांश्च ॥ शुक्रश्चंऽऋतुपाश्चा त्यंᳫहाः ८० ईदृङ् ॥ ईदृङ्न्यादृङ्
सुदृङ्प्रतिसदृङ् ॥ मितश्चुसम्मितश्चुसभंराः ८१ ऋतश्चंसुत्य
श्चंध्रुवश्चंधुरुणश्च ॥ धर्त्ताचंविधर्त्ताचंविधारयः ८२ ऋतुजिच्चं॥ स
त्युजिच्चसेनुजिच्चंसुषेणश्च॥अन्तिमित्रश्चदूरेऽअमित्रश्चगुणः ८३
ईदृक्षांसऽएतादृक्षांसः ॥ ईदृक्षांसऽएतादृक्षांसऽऊषुणंःसुदृक्षांसुःप्र
तिसदृक्षासुऽएतंन ॥ मितासंश्चुसम्मितासोनोऽअद्यसभंरसोमरुतो

संहि ११७

सूज्ञेऽअस्मिन् ॥ ८४ स्वतंवाँश्च ॥ प्रघासीचंसान्तपनश्चंगृहमेधीचं ॥ क्रीडीचंशाकीचोन्नेषी ८५ इन्द्रन्दैवीः ॥ इन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन् ॥ एवमिमंयजमानन्दैवीश्चविशोमानुषीश्चानुवर्त्मानोभवन्तु ८६ [ ७ ] इमꣳस्तनम् ॥ इमꣳस्तनमूर्जस्वन्तन्धयापाम्प्रपीनमग्नेसरिरस्यमद्ध्ये ॥ उत्संजुषस्वमधुमन्तमर्वन्त्समुद्रियꣳसदनमाविशस्व ८७ घृतम्मिमिक्षे ॥ घृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ८९ समुद्रादूर्म्मिः ॥ समुद्रादूर्म्मिर्म्मधुमाꣳ ॥ उदारदुपाꣳशुनासमंमृतत्त्वमानट् ॥

पू.अ. १७ ११७

घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ९ वयन्ना

म ॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उ

पब्रह्माशृणवच्छस्यमानञ्चतुःशृङ्गोवमीद्गौरऽएतत् १० चत्वारिशृङ्गा ॥

चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाब

द्धोवृषभोरोरवीतिमहोदेवोमर्त्याꣳ ॥ आविवेश ११ त्रिधाहितम् ॥

त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् ॥ इन्द्रऽएक

ꣳसूर्यऽएकञ्जजानवेनादेकꣳस्वधयानिष्टतक्षुः १२ एताऽअर्षन्ति ॥

एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधाराऽअ

भिचाकशीमिहिरण्ययोवेतसोमध्यऽआसाम् १३ सम्यक्स्रवन्ति ॥

संहि. ११८ | पू.अ. १७

सरितोनधेनाऽअन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्म्मयोघृत
स्यमृगाऽइवक्षिपणोरीषमाणाः १४ सिन्धोरिवप्प्राध्वने ॥ सिन्धो
रिवप्प्राध्वनेशूघनासोवातप्प्रमियःपतयन्तियह्वाः ॥ घृतस्यधाराऽअ
रुषोनवाजीकाष्ठाभिन्दन्नूर्म्मिभिःपिन्वमानः १५ अभिप्रवन्त ॥
अभिप्रवन्तसमनेवयोषाःकल्याण्यःस्मयमानासोऽअग्निम् ॥ घृ
तस्यधाराःसमिधोनसन्तताजुषाणोहर्य्यतिजातवेदाः १६ कन्या
ऽइववहतुम् ॥ कन्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाक
शीमि ॥ यत्रसोमःसूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते १७
अभ्यर्षत ॥ सुष्टुतिङ्गव्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमंय

११८

ज्ञन्नंयतदेवतानोघृतस्यधारामधुमत्पवन्ते १८ धामन्ते ॥ धामन्ते
विश्श्वम्भुवनमधिश्श्रितमन्तःसमुद्रेहृद्यन्तरायुषि ॥ अपामनीके
समिथेयऽआभृतस्तमश्यामधुमन्तन्तऽऊर्म्मिम् १९ [१३] इतिसं
हितायांदीर्घपाठेसप्तदशोध्यायः १७ वाजःसत्यमूक्ँचतुष्काअश्मा
ग्निस्त्रिकाव॑शुःपंचैकाचतस्रोवाजायद्वेवाजस्यन्नवष्टावृताषाट्त्रयो
दशाग्निंसुनर्ज्मिंसप्तयदाकूताद्वार्नहत्यायदशकौत्रयोदशसप्तसप्ततिः ॥
वाजश्च ॥ मेप्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमेक्रतुश्च
मेस्वरश्चमेश्श्लोकश्चमेश्श्रवश्चमेश्श्रुतिश्चमेज्ज्योतिश्चमेस्व
श्चमेयज्ञेनकल्पन्ताम् १ प्राणश्च ॥ मेपानश्चमेव्यानश्चमेसुश्च

मेचित्तञ्चमऽआधीतञ्चमेवाक्चमेमनश्चमेचक्षुश्चमेश्रोत्रञ्चमेदक्ष
श्चमेबलञ्चमेयज्ञेनकल्पन्ताम् २ ओजश्च ॥ मेसहश्चमऽआत्मा
चमेतनूश्चमेशर्म्मचमेवर्म्मचमेङ्गानिचमेस्थीनिचमेपरूꣳषिचमे
शरीराणिचमऽआयुश्चमेजराचमेयज्ञेनकल्पन्ताम् ३ ज्यैष्ठ्यञ्च ॥
मऽआधिपत्यञ्चमेमन्युश्चमेभामश्चमेमश्चमेम्भश्चमेजेमाचमे
महिमाचमेवरिमाचमेप्रथिमाचमेवर्षिमाचमेद्राघिमाचमेवृद्धञ्चमे
वृद्धिश्चमेयज्ञेनकल्पन्ताम् ४ सत्यञ्च ॥ मेश्रद्धाचमेजगच्चमेधनं
चमेविश्वञ्चमेमहश्चमेक्रीडाचमेमोदश्चमेजातञ्चमेजनिष्यमा
णञ्चमेसूक्तञ्चमेसुकृतञ्चमेयज्ञेनकल्पन्ताम् ५ ऋतञ्च ॥ मेमृतञ्चमे

यक्ष्मश्च मेनामयश्च मे जीवातुश्च मे दीर्घायुत्वञ्च मेनमित्रञ्च मे भयञ्च मे सुखञ्च मे शयनञ्च मे सूषाश्च मे सुदिनञ्च मे यज्ञेन कल्पन्ताम् ६ यन्ता च ॥ मे धर्त्ता च मे क्षेमश्च मे धृतिश्च मे विश्वञ्च मे महश्च मे संविच्च मे ज्ञात्रञ्च मे सूश्च मे प्रसूश्च मे सीरञ्च मे लयश्च मे यज्ञेन कल्पन्ताम् ७ शं च मे मयश्च मे प्रियञ्च मेनुकामश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्रविणञ्च मे भद्रञ्च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम् ८ [ ३ ] ऊर्क्क् ॥ मे सूनृता च मे पयश्च मे रसश्च मे घृतञ्च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रञ्च मऽऔद्भिद्यञ्च मे यज्ञेन कल्पन्ताम् ९ रयिश्च ॥ मे रायश्च मे पुष्टञ्च मे पुष्टि

श्चमेविभुचमेप्रभुचमेपूर्णञ्चमेपूर्णतरञ्चमेकुयवञ्चमेक्षितञ्चमेन्नञ्च
मेक्षुच्चमेयज्ञेनकल्पन्ताम् १० वित्तञ्च ॥ मेवेद्यञ्चमेभूतञ्चमेभवि
ष्यच्चमेसुगञ्चमेसुपथ्यञ्चमऽऋद्धञ्चमेऽऋद्धिश्चमेक्लृप्तञ्चमेक्लृप्ति
श्चमेमतिश्चमेसुमतिश्चमेयज्ञेनकल्पन्ताम् ११ व्रीहयश्च ॥ मेय
वाश्चमेमाषाश्चमेतिलाश्चमेमुद्गाश्चमेखल्वाश्चमेप्रियङ्गवश्चमे
ऽणवश्चमेश्यामाकाश्चमेनीवाराश्चमेगोधूमाश्चमेमसूराश्चमेयज्ञे
नकल्पन्ताम् १२ [ ] अश्माच ॥ मेमृत्तिकाचमेगिरयश्चमेप
र्वताश्चमेसिकताश्चमेवनस्पतयश्चमेहिरण्यञ्चमेयश्चमेश्याम
ञ्चमेलोहञ्चमेसीसञ्चमेत्रपुचमेयज्ञेनकल्पन्ताम् १३ अग्निश्च ॥

मुऽआपंश्च्चमेवीरुधंश्च्चमुऽओषंधयश्च्चमेकृष्टपुच्च्याश्च्चंमेकृष्टपुच्च्या
श्च्चंमेग्ग्राम्म्याश्च्चंमेपुशवं ऽआरुण्याश्च्चंमेवित्तञ्चंमुविर्त्तिश्च्चमेभूत
ञ्चंमुभूतिंश्च्चमेयुज्ञेनंकल्पन्ताम् १४ वसुंच ॥ मेवसुतिश्च्चंमुकर्म्मं
चमुशक्तिंश्च्चुमेर्थश्च्चमुऽएमंश्च्चम ऽइत्याचंमुगतिंश्च्चमेयुज्ञेनंकल्प
न्ताम् १५ [ ] अग्निश्च्चं ॥ मुऽइन्द्रंश्च्चमुसोमंश्च्चमुऽइन्द्रंश्च्चमेस
विताचंमुऽइन्द्रंश्च्चमुसरंस्वतीचमु ऽइन्द्रंश्च्चमेपूषाचंमुऽइन्द्रंश्च्चमुबृह
स्प्पतिंश्च्चमुऽइन्द्रंश्च्चमेयुज्ञेनंकल्पन्ताम् १६ मित्रश्च्चं ॥ मुऽइन्द्रं
श्च्चमेवरुंणश्च्चमुऽइन्द्रंश्च्चमेधातार्चमु ऽइन्द्रंश्च्चमुत्त्वष्टांचमुऽइन्द्रंश्च्च
मेमुरुतंश्च्चमु ऽइन्द्रंश्च्चमुविश्श्वेंचमेदेवाऽइन्द्रंश्च्चमेयुज्ञेनंकल्पन्ता

संहि. १२१

पू.अ. १८

म् १७ पृथिवीचं ॥ मुऽइन्द्रंश्चमेन्तरिक्षञ्चमुऽइन्द्रंश्चमेद्यौश्चंमुइन्द्रं
श्चमेसमांश्चमुऽइन्द्रंश्चमेनक्षंत्राणिचमु ऽइन्द्रंश्चमेदिशंश्चमुऽइन्द्रं
श्चमेयुज्ञेनंकल्पन्ताम् १८ [ ] अुंशुश्चं ॥ मेरश्मिश्चमेदां
भ्यश्चमेधिपतिश्चम ऽउपाश्शुश्चंमेन्तर्यामश्चंम ऽऐन्द्रवायुव
श्चंमेमैत्रावरुणश्चंम ऽआश्विनश्चंमेप्रतिप्रस्थानंश्चमेशुक्रश्चं
मेमन्थीचंमेयुज्ञेनंकल्पन्ताम् १९ आग्रयुणश्चं ॥ मेवैश्वदेवश्चं
मेध्रुवश्चंमेवैश्वानुरश्चंमऽऐन्द्राग्नश्चंमेमहावैश्वदेवश्चमेमरुत्व
तीयांश्चमेनिष्कैवल्यश्चमे सावित्रश्चंमेसारस्वतश्चंमेपात्नीवत
श्चंमेहारियोजनश्चंमेयुज्ञेनंकल्पन्ताम् २० स्रुचंश्च ॥ मेचमुसा

१२१

श्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मेऽधिषवणे च मे पू
तभृच्च मऽआधवनीयश्च मे वेदिश्च मे बर्हिश्च मेऽवभृथश्च मे स्वगाका
रश्च मे यज्ञेन कल्पन्ताम् २१ अग्निश्च ॥ मे घर्मश्च मेऽर्कश्च मे सूर्य
श्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मे दितिश्च मे दितिश्च मे द्यौ
श्च मेऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम् २२ व्रतं च ॥ म
ऽऋतवश्च मे तपश्च मे संवत्सरश्च मेऽहोरात्रे ऽऊर्वष्ठीवे बृहद्रथन्तरे च मे
यज्ञेन कल्पन्ताम् २३ [ ] एका च ॥ मे तिस्रश्च मे तिस्रश्च मे पञ्च
च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च मऽएकादश च मऽएका
दश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च

मेसुप्तदंशचमेनवंदशचमुऽएकंविꣳशतिश्चमुऽएकंविꣳश
तिश्चमुत्रयोविꣳशतिश्चमुत्रयोविꣳशतिश्चमेपञ्चविꣳशतिश्चमेप
ञ्चविꣳशतिश्चमेसुप्तविꣳशतिश्चमेसुप्तविꣳशतिश्चमुनवंविꣳशति
श्चमुनवंविꣳशतिश्चमुऽएकंत्रिꣳशच्चमुऽएकंत्रिꣳशच्चमुत्रयंस्त्रिꣳशच्च
मेसुज्ञेनंकल्पन्ताम् २४ चतंस्रश्च ॥ मेष्टौचंमेष्टौचंमेद्वादंशचमेद्वा
दंशचमेषोडंशचमुषोडंशचमेविꣳशतिश्चंमेविꣳशतिश्चंमुचतुर्विꣳश
तिश्चमेचतुर्विꣳशतिश्चमुष्टाविꣳशतिश्चमुष्टाविꣳशतिश्चमुद्वात्रिꣳ
शच्चमेद्वात्रिꣳशच्चमुषट्त्रिꣳशच्चमुषट्त्रिꣳशच्चमेचत्वारिꣳशच्चंमेचत्वारिꣳ
ꣳशच्चंमेचतुश्चत्वारिꣳशच्चमुचतुश्चत्वारिꣳशच्चमुष्टाचंत्वारिꣳशच्च

मेयुज्ञेनंकल्पन्ताम् २५ त्र्यविंश्च ॥ मेत्र्युवीचंमेदित्युवाट्चंमेदित्यौ
हीचंमेपञ्चाविंश्चमेपञ्चावीचंमे त्रिवत्सश्चंमे त्रिवत्साचंमेतुर्युवा
ट्चंमेतुर्यौहीचंमेयुज्ञेनंकल्पन्ताम् २६ पुष्ठवाट्चं ॥ मेपष्ठौहीचंमऽउ
क्षाचंमेवुशाचंम ऽऋषुभश्चंमेवेहच्चंमेनुड्वाँश्चंमेधेनुश्चंमेयुज्ञेनंक
ल्पन्ताम् २७ [ ] वाजायुस्वाहा ॥ प्रसुवायुस्वाहापिजायु
स्वाहाक्रतवेस्वाहावसवेस्वाहाहुर्पतयेस्वाहाह्ने मुग्धायुस्वाहामु
ग्धायवैनंशिनायुस्वाहाविनंशिनऽआन्त्यायुनायुस्वाहान्त्याय
भौवनायुस्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहाप्रजापतयेस्वा
हा ॥ इयन्तेराण्मित्रायंयुन्तासियमनऽऊर्जेत्वावृष्ट्यैत्वाप्रजाना

न्त्वाधिपत्याय २८ आयुर्य्यज्ञेनकल्पताम्प्राणोयज्ञेनकल्पताञ्च
क्षुर्य्यज्ञेनकल्पता ᳪ श्श्रोत्रंयज्ञेनकल्पतांवाग्यज्ञेनकल्पताम्म
नोयज्ञेनकल्पतामात्मायज्ञेनकल्पताम्ब्रह्मायज्ञेनकल्पताञ्ज्यो
तिर्य्यज्ञेनकल्पता ᳪ स्वर्य्यज्ञेनकल्पताम्पृष्ठंयज्ञेनकल्पतांयज्ञो
यज्ञेनकल्पताम् ॥ स्तोमश्श्चयजुश्श्चऋक्सामचबृहच्चरथन्तरञ्च ॥
स्वर्द्देवाऽअगन्मामृताऽअभूमप्प्रजापतेः प्प्रजाऽअभूमवेट्स्वाहा ॥ २९
[ १ ] वाजस्यनु ॥ प्प्रसवेमातरम्महीमदितिन्नामवचसाकरामहे ॥
यस्यामिदंविश्श्वम्भुवनमाविवेशतस्यान्नोदेवःसविताधर्म्मसाविषत्
३० विश्श्वेअद्य ॥ मरुतोविश्श्वऽऊतीविश्श्वेभवन्त्वग्नयःसमिं

द्धाः॥ विश्वैनोदेवाऽअवसागमन्तुविश्वंमस्तुद्रविणंवाजोऽअस्मे ३१ वाजोनः॥ सप्तप्प्रदिशश्चतंस्रोवापरावतंः॥ वाजोनोविश्वैर्द्देवैर्द्धनंसाताविहावंतु ३२ वाजोनः॥ वाजोनोऽअद्यप्रसुवातिदानंवाजोदेवाः॥ ऽऋतुभिंःकल्पयाति॥ वाजोहिमासर्ववीरञ्जजानविश्वाऽआशावाजंपतिर्जयेयम् ३३ वाजंःपुरस्तांत॥ वाजंःपुरस्तांदुतमंद्ध्यतोनोवाजोदेवान्हविषांवर्द्धयाति॥ वाजोहिमासर्ववीरञ्चकारसर्व्वाऽआशावाजंपतिर्भवेयम् ३४ सम्मां॥ सृजामिपयंसापृथिव्याःसम्मांसृजाम्म्युद्भिरोषंधीभिः॥ सोहंवाजंसनेयमग्ने ३५ पयंःपृथिव्याम्॥ पयंःपृथिव्याम्पयऽओषंधीषु

पयोदिव्यन्तरिक्षेपयोधाः॥ पयस्वतीःप्प्रदिशःसन्तुमह्यम् ३६ देव
स्यत्वा ॥ सवितुःप्प्रसवेश्श्विनोर्ब्बाहुभ्यांम्पूष्णोहस्ताभ्याम् ॥
सरस्वत्यैव्वाचोयन्तुर्य्यन्त्रेणाग्नेःसाम्म्राज्ज्येनाभिषिञ्चामि ३७[८]
ऋताषाडृतधामा ॥ ऋताषाडृतधामाग्निर्गन्धर्व्वस्तस्यौषधयोप्प्सर
सोमुदोनाम ॥ सनऽइदम्ब्रह्मक्षत्त्रम्पातुतस्म्मैस्वाहाव्वाट्ताभ्यःस्वा
हा ३८ सꣳहितोव्विश्श्वसामा ॥ सूर्य्योगन्धर्व्वस्तस्यमरीचयोप्प्स
रसऽआयुवोनाम ॥ सनऽइदम्ब्रह्मक्षत्त्रम्पातुतस्म्मैस्वाहाव्वाट्ताभ्यः
स्वाहा ३९ सुषुम्म्णःसूर्य्यरश्म्मिः ॥ सुषुम्म्णःसूर्य्यरश्म्मिश्चन्द्र
मागन्धर्व्वस्तस्यनक्षत्त्राण्यप्प्सरसोभेकुरयोनाम ॥ सनऽइदम्ब्रह्म

क्षत्रम्पांतुतस्म्मैस्वाहाुवाट्ताभ्युःस्वाहां ४० इषिरोविश्श्वव्व्ययंचाः॥
इषिरोविश्श्वव्व्ययंचाुवातोंगन्धुर्व्वस्तस्यापोंऽअप्प्सुरसुऽऊर्ज्जोंनामं ॥
स नंऽइदम्ब्रह्मंक्षुत्रम्पांतुतस्म्मैस्वाहाुवाट्ताभ्युःस्वाहां ४१ भुज्युः
सुंपुर्णः॥ भुज्युः सुंपुर्णोयुज्ञोगन्धुर्व्वस्तस्युदक्षिणाऽअप्प्सुरसंस्तु
वानामं॥ सनंऽइदम्ब्रह्मंक्षुत्रम्पांतुतस्म्मैस्वाहाुवाट्ताभ्युः स्वाहां
४२ प्रजापंतिर्व्विश्श्वकंर्म्मा॥ मनोंगन्धुर्व्वस्तस्यंऽऋक्कसामान्यंप्प्सु
रसुऽएष्टंयोनामं॥ सनंऽइदम्ब्रह्मंक्षुत्रम्पांतुतस्म्मैस्वाहाुवाट्ताभ्युः
स्वाहां ४३ सनंः॥ सनोंभुवनस्यपतेप्प्रजापतेुयस्यंतऽउुपरिंगृहा
यस्यंवेह॥ अुस्म्मैब्रह्मंणेस्म्मैक्षुत्रायुमहिंशर्म्मंयच्छुस्वाहां ४४ सु

मुद्रोसि ॥ समुद्रोसिनभंस्वानार्द्रदांनुःशुम्भूर्म्मयोभूरभिमांवाहिस्वा
हांमारुतोसिमरुतांङ्गणः । शुम्भूर्म्मयोभूरभिमांवाहिस्वाहांवस्यू
सिदुवंस्वाऽछम्भूर्म्मयोभूरभिमांवाहिस्वाहा ४५ यास्ते ॥ ऽअग्ने
सूर्य्येरुचोदिवंमातन्वन्तिरश्मिभिः ॥ ताभिर्न्नोऽअद्यसर्वाभीरुचे
जनायनस्कृधि ४६ यावंः ॥ यावोदेवाःसूर्य्येरुचोगोष्ष्वश्श्वेषु
यारुचंः ॥ इन्द्राग्नीताभिः सर्वाभीरुचंन्नोधत्तबृहस्पते ४७ रुचं
न्नः ॥ रुचंन्नोधेहिब्राह्मणेषुरुचुंराजंसुनस्कृधि ॥ रुचंविश्येषुशू
द्रेषुमयिधेहिरुचारुचंम् ४८ तत्वा ॥ यामिब्रह्मंणावन्दमानस्तदाशा
स्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुंशर्ठसमानऽआ

युꣳप्रमौषीः ४९ स्वर्ण ॥ स्वर्णघर्म्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्ण

शुक्रः स्वाहा स्वर्णज्योतिः स्वाहा स्वर्णसूर्यःस्वाहा ५०[१३] अ

ग्निरश्वन्नाज्जिम ॥ अग्निरश्वन्नाज्जिमशवंसाघृतेनदिव्यꣳसुपर्णावयसाबृ

हन्तम् ॥ तेनवयङ्गमेमव्रध्नस्यविष्टपꣳस्वोरुहाणाअधिनाकमुत्तम

म् ५१ शतम् १००० ॥ इमौते ॥ पक्षावजरौपतत्रिणौयाभ्याꣳर

क्षाꣳस्यपहꣳस्यग्ने ॥ ताभ्याम्पतेमसुकृतामुलोकंयत्रऽऋषयो

जग्मुःप्रथमजाःपुराणाः ५२ इन्दुर्दक्षः ॥ श्येनऽऋतावाहिरण्यप

क्षःशकुनोभुरण्युः ॥ महान्त्सधस्थेध्रुवऽआनिषत्तोनमस्तेऽअस्तु

मामाहिꣳसीः ५३ दिवोमूर्द्धा ॥ सिपृथिव्यानाभिरूर्ग्गपामोषधीना

संहि. १२६ मि म॒ ॥ वि॒श्श्वायु॒ꣳशर्म्म॑सु॒प्प्रथा॒नमं॒स्प्पृथे ५४ वि॒श्श्वंस्य॒मू॒र्द्धन् ॥ वि॒श्श्वंस्य॒मू॒र्द्धन्नधि॑तिष्ठसि॒श्श्रि॒तः सं॑मु॒द्द्रेते॒ह्रदं॑यमु॒प्प्स्वायु॒र्पोद॑त्तोद॒धिम्भि॒न्त ॥ दि॒वस्प्प॒र्ज्जन्या॒दन्त॑रिंक्षात्पृथि॒व्यास्ततो॑नो॒वृष्ट्या॑व ५५ इ॒ष्टोय॒ज्ञः ॥ इ॒ष्टोय॒ज्ञोभृगुं॑भि॒रा॒शी॒र्द्दावसुं॑भिः ॥ तस्यं॑नऽइ॒ष्टस्यं॒प्प्री॒तस्य॒द्द्रवि॑णे॒हाग॑मेः ५६ इ॒ष्टोऽअ॒ग्निः ॥ इ॒ष्टोऽअ॒ग्निराहु॑तःपिपर्त्तु॒नऽइ॒ष्टꣳह॒विः ॥ स्व॒गेदन्दे॒वेभ्यो॒नमः॑ ५७ [ ७ ] य॒दाकू॑तात् ॥ य॒दाकू॑तात्स॒मसु॑स्रोद्धृ॒दोवा॒मन॑सोवा॒सम्भृ॑तु॒ञ्चक्षु॑षोवा ॥ तद॑नु॒प्प्रेत॑सु॒कृ॒तामु॑लो॒कंयत्र॒ऽऋष॑योजु॒ग्मुः प्प्र॑थम॒जाः पु॑रा॒णाः ५८ ए॒तꣳस॑धस्थ॒परि॑तेददामि॒यमा॒वहा॑च्छे॒वु॒धिं॒जा॒तवे॑दाः ॥ अ॒न्वा॒गु॒न्ता॒य॒ज्ञप॑ति॒र्वो॒ऽअ पू.अ. १८ १२६

न्त्रुतछंस्म्मंजानीतपरमेव्योमन् ५९ एतज्जांनाथ ॥ परमेव्योमुन्देवाः
सधस्त्थाविदरूपमंस्य ॥ यदागच्छांत्पुथिभिर्द्देवुयानैरिष्टापूर्त्तेकृणवा
थाविरंस्म्मै ६० उद्बुंद्ध्यस्व ॥-उद्बुंद्ध्यस्वाग्ग्नेप्प्रतिंजागृहित्त्वमिष्टापू
र्तेसर्ठसृंजेथामुयञ्चं ॥ अस्म्मिन्त्सुधस्थेऽअद्ध्युत्तरस्म्मुन्विश्श्वेदे
वाुयजंमानश्श्चसीदत ६१ येनुवहसि ॥ सुहस्त्रंयेनांग्नेसर्व्ववेदुसम् ॥
तेनेमंय्युज्ञन्नोनयुस्वर्द्देवेषुगन्तंवे ६२ प्रस्तुरेणंपरिुधिना ॥ स्रुचावे
द्यांचुबर्हिषा ॥ ऋचेमंय्युज्ञन्नोनयुस्वर्द्देवेषुगन्तंवे ६३ यद्दत्तम् ॥ य
द्दत्तंय्यत्परांदानुंय्यत्पूर्त्तंय्याश्श्चुदाक्षिणाः ॥ तदुग्ग्निर्व्वैश्श्वकर्म्मुणः
स्वर्द्देवेषुनोदधत् ६४ यत्रुधाराः ॥ यत्रुधाराऽअनंपेतामधोर्ग्घृतस्यं

संहि.
१२७

पू.अ.
१८

चुषाः ॥ तदग्निर्वैश्वकर्म्मणः स्वर्द्देवेषुनोदधत् ६५ अग्निरस्मि ॥ अग्निरस्मिजन्मनाजातवेदाघृतम्मेचक्षुरमृतम्मऽआसन् ॥ अर्कस्त्रिधातूरजसोविमानोजस्रोघर्म्मोहविरस्मिनाम ६६ ऋचोनाम ॥ ऋचोनामास्मियजूंषिनामास्मिसामानिनामास्मि ॥ येऽअग्नयः पाञ्चजन्याऽअस्याम्पृथिव्यामधि ॥ तेषामसित्वमुत्तमः प्रनोजीवातवेसुव ६७ [ १० ] वार्त्रहत्यायशवसेपृतनाषाह्यायच ॥ इन्द्रत्वावर्त्तयामसि ६८ सहदानुम्पुरुहूत ॥ क्षियन्तमहस्तमिन्द्रसम्पिणक्कुणारुम् ॥ अभिवृत्रंवर्द्धमानम्पियारुमपादमिन्द्रतवसाजघन्थ ६९ विनः ॥ विनऽइन्द्रमृधोजहिनीचायच्छपृतन्यतः ॥ योऽअस्माः ॥

१२७

ऽअभिदासुत्यधंरङ्गमयातमं÷ ७० मृगोन ॥ भीमःकुंचरोगिरिष्ठाः
परावतऽआजंगन्थापरस्याः ॥ सृकंसुंशायंपविमिन्द्रतिग्ग्मंवि
शत्रून्ताड्विविमृधोनुदस्व ७१ वैश्वानरोनं÷ ॥ वैश्वानरोनंऽऊतय
ऽआप्रयांतुपरावतं ÷ ॥ अग्निर्न्न ÷सुष्टुतीरुपं ७२ पृष्टोदिवि ॥ पृष्टो
ऽअग्निःपृथिव्यांपृष्टोविश्वाऽओषधीराविवेश ॥ वैश्वानरःसहसा
पृष्टोऽअग्निःसनोदिवासरिषस्पातुनक्तम् ७३ अश्यामतम् ॥ अश्या
मतङ्कामंमग्नेतवोतीऽअश्यामंरयिंरंयिवःसुवीरम् ॥ अश्यामवाज
मभिवाजयन्तोश्यामंद्युम्म्नमंजराजरंन्ते ७४ वयन्ते ॥ ऽअद्यारंरि
माहिकामंमुत्तानहस्तानमंसोपसद्य ॥ यजिष्ठेनमनंसायक्षिदेवानस्रे

घतामन्नमंनुविप्प्रोऽअग्ग्ने ७५ घामुच्छदग्निः ॥ घामुच्छदग्निरिन्द्रोब्र
ह्माद्देवोबृहस्प्पतिंः ॥ सचेतसोविश्श्वेदेवायज्ञम्प्रावन्तुनःशुभे ७६
त्वंऽअंविष्ठ ॥ दाशुषोनॄंःपाहिशृणुधीगिरंः ॥ रक्षातोकमुतत्मना
७७ [ १० ] इतिसंहितापाठेअष्टादशोऽध्यायः १८ स्वाद्वींत्वैकाद
शदेवायज्ञंविंशतिःसुरावंतंसप्तदशोदीरतांत्रयोदशाच्याजानुर्दश
सोमोराजाष्टौसीसेनतंत्रंषोडशसप्तपंचनवतिः ॥ हरिःओम् ॥ स्वा
द्वींत्त्वां ॥ स्वादुनांतीव्रान्तीव्रेणामृतांममृतेन ॥ मधुमतीम्मधुमतासृ
जामिसंसोमेन ॥ सोमोस्यश्श्विभ्यांम्पच्चस्वसरस्वत्यैपच्चस्वे
न्द्रायसुत्राम्णेपच्चस्व १ परीतः ॥ परीतोषिंञ्चतासुतंसोमोयऽउं

त्तुमर्ᳪहुविः ॥ दुधुन्न्वाषोनस्सौंऽअप्प्सुन्तरासुषावसोममद्रिभिः २
वायोःपूतः॥ पुवित्त्रेणप्प्रत्यङ्क्सोमोऽअतिद्द्रुतः॥ इन्द्रस्य्युज्ज्यःस
खा ॥ वायोःपूतःपुवित्त्रेणप्प्राङ्क्सोमोऽअतिद्द्रुतः ॥ इन्द्रस्य्युज्ज्यः
सखा ३ पुनातिते ॥ परिस्स्रुतᳪसोमᳪसूर्य्यस्यदुहिता ॥ वारेणशश्श्वं
तातना ४ ब्रह्मंक्षत्त्रम् ॥ ब्रह्मंक्षत्त्रम्पवतेतेजऽइन्द्रियᳪसुरयासोमः
सुतऽआसुतोमदाय ॥ शुक्क्रेणदेवदेवताःपिपृग्ग्धिरसेनान्नंयजमा
नायधेहि ५ कुविदङ्ग ॥ यवमन्तोयवञ्चिद्यथादान्त्यनुपूर्व्वंवियूय ॥
इहेहैषाङ्कृणुहिभोजनानियेबर्हिषोनमऽउक्तिंयजन्ति ॥ उपयामगृ
हीतोस्यश्श्विभ्भ्यान्त्वासरस्वत्यैत्वेन्द्रायत्वा सुत्राम्म्णऽएषतेयो

निस्तेजसेत्त्वावीर्य्यायत्वाबलायत्वा ६ नानाहि ॥ वान्देवहितᳬंस
दस्कृतम्मासᳬंसृक्षाथाम्परमेव्योमन् ॥ सुरात्वमसिशुष्मिणीसोम
ऽएषमामाहिᳬंसीःस्वांयोनिमाविशन्ती ७ उपयामगृहीतोसि ॥ उ
पयामगृहीतोस्याश्विनन्तेजःसारस्वतंवीर्य्यमैन्द्रम्बलम् ॥ एषते
योनिर्म्मोदायत्त्वानन्दायत्त्वामहसेत्त्वा ८ तेजोसि ॥ तेजोसितेजो
मयिधेहिवीर्य्यमसिवीर्य्यम्मयिधेहिबलमसिबलम्मयिधेह्योजो
स्योजोमयिधेहिमन्युरसिमन्युम्मयिधेहिसहोसिसहोमयिधेहि ९
याव्याघ्रम् ॥ याव्याघ्रंविषूचिकोभौवृकञ्चरक्षति ॥ श्येनम्पतत्त्रि
णᳬंसिᳬंहᳬंसेमम्पात्वᳬंहसः १० यदापिपेष ॥ मातरम्पुत्त्रःप्रमुदितो

म

धयन् ॥ एतत्तदग्नेऽअनृणोभवाम्यहतौपितरौमया ॥ सम्पृचस्थ
सम्माभद्रेणपृङ्क्तविपृचस्थविमापाप्मनापृङ्क्त ११ [ ११ ] देवायज्ञम् ॥
देवायज्ञमतन्वतभेषजम्भिषजाश्विना ॥ वाचासरस्वतीभिषगिन्द्रा
येन्द्रियाणिदधतः १२ दीक्षायैरूपम् ॥ दीक्षायैरूपंशष्पाणिप्रा
यणीयस्यतोक्मानि ॥ क्रयस्यरूपंसोमस्यलाजाःसोमांशवोम
धु १३ आतिथ्यरूपम्मासरम् ॥ आतिथ्यरूपम्मासरम्महावीर
स्यनग्नहुः ॥ रूपमुपसदामेतत्तिस्रोरात्रीःसुरासुता १४ सोमस्यरूप
म् ॥ सोमस्यरूपङ्क्रीतस्यपरिस्रुत्परिषिच्यते ॥ अश्विभ्यान्दुग्ध
म्भेषजमिन्द्रायैन्द्रंसरस्वत्या १५ आसन्दीरूपम् ॥ आसन्दीरूप

ध्रांजासुन्द्यौवेद्यौकुम्भीसुंराधानी ॥ अन्तंरऽउत्तरवेद्यारूपङ्क्ांरोत्तुरो
भिषक् १६ वेद्यावेदिं ॥ वेद्यावेदिंःसमाप्प्यतेवर्हिषांबर्हिरिन्द्रिय
म् ॥ यूपेंनुयूपंऽआप्प्यतेप्प्रणीतोऽअग्निरग्निनां १७ हविर्द्धानंऽउय
त् ॥ हविर्द्धानंऽउयदश्श्विनाग्नींध्रंऽउयत्सरंस्वती ॥ इन्द्रायेन्द्रधंसदंस्कृ
तम्पंत्क्नीशालङ्गार्हपत्त्यः १८ प्प्रैषेभिंःप्प्रैषान् ॥ प्प्रैषेभिंःप्प्रैषानांप्प्नो
त्याप्प्रीभिंराप्प्रीरुयज्ञस्यं ॥ प्प्रयाजेभिंरनुयाजान्वंषट्कारेभिराहुंतीः
१९ पुशुभिंःपुशून् ॥ पुशुभिंःपुशूनांप्प्नोतिपुरोडाशैंर्हवीधंष्ष्या ॥
छन्दोंभिःसामिधेनीरुयाज्ज्याभिर्वषट्कारान् २० धानाःकंरम्भःस
क्क्तवंःपरीवापःपयोदधिं ॥ सोमंस्यरूपंध्हविषंऽआमिक्षावाजिनम्म

धुं २१ धानानांᳬरूपम्॥ धानानांᳬरूपङ्कुवलम्परीवापस्यंगोधूमाः।
सक्तूनांᳬरूपम्बदरमुपवाकाःकरम्भस्यं २२ पयसोरूपम्॥ पयं
सोरूपंयद्यवांदध्नोरूपङ्कर्कन्धूनि॥ सोमस्यरूपंवाजिनᳬसौम्य
स्यंरूपमामिक्षा २३ आश्रावय॥ आश्रावयेतिस्तोत्रियाःप्र
त्याश्रावोऽअनुरूपः॥ यजेतिधाय्यारूपम्प्रगाथायेयजामहाः २४
अर्द्धऽऋचैरुक्थानाम्॥ अर्द्धऽऋचैरुक्थानांᳬरूपम्पदैराप्नोतिनि
विदः॥ प्रणवैः शस्त्राणांᳬरूपम्पयसासोमऽआप्यते २५ अश्विव
भ्यांम्प्रातःसवनम्॥ अश्विभ्यांम्प्रातःसवनमिन्द्रेणैन्द्रम्माध्यं
न्दिनम्॥ वैश्वदेवᳬसरस्वत्यातृतीयमाप्तᳬसवनम् २६ वायव्यै

र्वायुद्र्यानि॥ वायुद्र्यैर्वायुद्र्यान्याप्नोतिसतेनद्रोणकलशम् ॥ कुम्भी
भ्यांमम्भृणीसुतेस्थालीभिस्थालीराप्नोति २७ यजुर्भिराप्यन्ते॥
यजुर्भिराप्यन्तेग्रहाग्रहैस्तोमांश्चविष्टुतीः॥ छन्दोभिरुक्थाशस्त्रा
णिसाम्नावभृथऽआप्यते २८ इडाभिर्भक्षान् ॥ इडाभिर्भक्षाना
प्नोतिसूक्तवाकेनाशिषः॥ शंयुनापत्नीसंयाजान्त्समिष्टयजुषासं
स्थाम् २९ व्रतेनदीक्षाम् ॥ व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षि
णाम् ॥ दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ३० एताव
द्रूपम् ॥ एतावद्रूपंयज्ञस्ययद्देवैर्ब्रह्मणाकृतम् ॥ तदेतत्सर्वमाप्नोति
यज्ञेसौत्रामणीसुते ३१ [ २० ] सुरावन्तम्बर्हिषदम् ॥ सुरावन्तम्ब

हिँषदँसुवीरँयज्ञँहिन्वन्तिमहिषानमोभिः ॥ दधानाःसोमन्दिवि
देवतासुमदेमेन्द्रँयजमानाःस्वर्क्काः ३२ यस्ते ॥ यस्तेरसःसम्भृत
ऽओषधीषुसोमस्यशुष्मःसुरयासुतस्य ॥ तेनजिन्वयजमानम्म
देनसरस्वतीमश्विनाविन्द्रमग्निम् ३३ यमश्विना ॥ नमुचेरासुरा
दधिसरस्वत्यसुनोदिन्द्रियाय ॥ इमन्तँशुक्रम्मधुमन्तमिन्दुँसोम
ँराजानमिहभक्षयामि ३४ यदत्र ॥ यदत्ररिप्तँरसिनःसुतस्ययदि
न्द्रोऽअपिबच्छचीभिः ॥ अहन्तदस्यमनसाशिवेनसोमँराजानमि
हभक्षयामि ३५ पितृभ्यःस्वधायिभ्यः ॥ स्वधानमःपितामहे
भ्यःस्वधायिभ्यःस्वधानमःप्रपितामहेभ्यःस्वधायिभ्यःस्व

धानमं÷ ॥ अक्षन्पितरोमीमदन्तपितरोतीतृपन्तपितरुःपितरःशुन्धं
ध्वम् ३६ पुनन्तुंमापितरं÷सोम्म्यासं÷पुनन्तुंमापितामुहाःपुनन्तुप्प्र
पितामहाः ॥ पुवित्रेणशुतायुंषा ॥ पुनन्तुंमापितामुहाः पुनन्तु
प्प्रपितामहाः ॥ पुवित्रेणशुतायुंषाव्विश्श्वमायुर्व्यश्श्नवै ३७ अग्ग्न
ऽआयूंषिषि ॥ पवस्वऽआसुवोर्ज्जमिषंञ्चनः ॥ आरेबाधस्वदुच्छुनां
म् ३८ पुनन्तुंमा ॥ देवजुनाःपुनन्तुमनंसाधियं÷ ॥ पुनन्तुव्विश्श्वां
भूतानिजातंवेदःपुनीहिमां ३९ पुवित्रेणपुनीहि ॥ माशुक्रेणंदेवदी
द्यंत् ॥ अग्नेक्रत्वाक्रतूँ१ऽरनु ४० यत्तेंपुवित्रंमुर्चिष्ष्यग्नेविततम
न्तरा ॥ ब्रह्मतेनंपुनातुमा ४१ पवंमानुःसः ॥ पवंमानुःसोऽअद्य

नः॑पवित्रेणुविचर्षणिः ॥ यः॒पोतासपुंनातुमा ४२ उभाभ्यान्देव॥
सवितःपवित्रेणसवेनेच ॥ माम्पुंनीहिविश्वतः ४३ वैश्वदेवीपु
नती ॥ देव्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाः ॥ तयामदन्तःस
धमादेषुवयꣳस्यामपतयोरयीणाम् ४४ येसमानाःसमनसःपितरो
यमराज्ये ॥ तेषांल्लोकः स्वधानमोयज्ञोदेवेषुकल्पताम् ४५ येस
मानाः ॥ येसमानाःसमनसोजीवाजीवेषुमामकाः ॥ तेषाꣳश्री
र्म्मयिकल्पतामस्मिँल्लोकेशतꣳसमाः ४६ द्वेसृती ॥ ऽअशृणव
म्पितॄणामहन्देवानामुतमर्त्यानाम् ॥ ताभ्यामिदंविश्वमेजत्स
मेतियदन्तरापितरम्मातरञ्च ४७ इदꣳहविः ॥ इदꣳहविःप्रजननम्मे

संहि॰ १३३ पू॰अ॰ १९

ऽअस्तुदशंवीरंसर्व्वंगणꣳस्वुस्तये ॥ आत्कमुसनिंप्प्रजांसनिंपशुंस निंलोकुसन्नयंभयुसनि ॥ अग्निःप्प्रुजाम्बंहुलाम्मेंकरोत्त्वन्नुम्पयोरे तोऽअस्म्मासुंधत्त ४८[१७] उदीरताम् ॥ उदीरतुामवंरुऽउत्परांसुऽउ न्न्मंद्ध्युमाःपितरंःसोम्म्यासंः ॥ असुंय्यऽईयुरंव्वृकाऽऋंतुज्ञास्तेनों वन्तुपितरोहवेंषु ४९ अङ्गिरसोनः ॥ पितरोनवंग्ग्वाुऽअथंर्व्वाणोभृ गंवःसोम्म्यासंः॥ तेषांव्वयꣳसुंमुतौयुज्ञियांनुामपिंभुद्रेसौंमनुसेस्यांम ५० येनंः ॥ येनुःपूर्वेंपितरंःसोम्म्यासोंनूहिरेसोंमपीथंवसिष्ठाः ॥ ते भिंर्य्यमःसꣳरराणोहुवीꣳष्युशन्नुशद्भिःप्रंतिकामममंत्तु ५१ त्वꣳसों म ॥ त्वꣳसोंमुप्प्रचिंकितोमनीषात्वꣳरजिंष्ठमनुंनेषिपन्थांम् ॥ तवु

१३३

प्प्रणीतीपितरोनऽइन्दोदेवेषुरत्नमभजन्तुधीराः ५२ त्वयाहि ॥ त्वयाहिनं पितरं सोमपूर्वेकर्म्माणिचक्रुःपवमानुधीराः ॥ वुन्वन्नवातःपरिधी१ँ॥ऽरपोर्णुवीरेभिरश्वैर्म्मघवाभवानः ५३ त्वꣳसोम ॥ पितृभिःसंविदानोनुद्यावापृथिवीऽआततन्थ ॥ तस्मैतऽइन्दोहविषाविधेमवयꣳस्यामपतयोरयीणाम् ५४ बर्हिषदःपितरः ॥ बर्हिषदःपितरऽऊत्यर्वागिमावोहव्याचकृमाजुषध्वम् ॥ तऽआगतावसाशन्तमेनाथानःशंय्योररपोदधात ५५ आहम् ॥ आहम्पितॄन्त्सुविदत्राः ॥ ऽअवित्सिनपातञ्चविक्रमणञ्चविष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभजन्तपित्वस्तऽइहागमिष्ठाः ५६ उपहूताःपितरः ॥ सोम्या

सोबर्हिंष्ष्येषुनिधिषुप्प्रियेषु ॥ तऽआगमन्तुतऽइहश्श्रुवन्त्वधिब्ब्रुव
न्तुतेवन्त्वस्म्मान् ५७ आयन्तु ॥ नःपितरःसोम्म्यासोग्निष्ष्वात्ताः
पथिभिर्द्देवयानैः ॥ अस्म्मिन्न्यज्ञेस्वधयामदन्तोधिब्ब्रुवन्तुतेवन्त्व
स्म्मान् ५८ अग्निष्ष्वात्ताःपितरः ॥ अग्निष्ष्वात्ताःपितरऽएहगच्छ
तसदःसदःसदतसुप्प्रणीतयः ॥ अत्ताहवीꣳषिप्प्रयतानिबर्हिंष्ष्य
थारयिꣳसर्व्ववीरन्दधातन ५९ येऽअग्निष्ष्वात्ताः ॥ येऽअग्निष्ष्वात्ता
येऽअनग्निष्ष्वात्तामद्ध्येदिवःस्वधयामादयन्ते ॥ तेब्भ्यःस्वराडसु
नीतिमेताꣳयथावशन्तन्न्वङ्कल्प्पयाति ६० अग्निष्ष्वात्तानृतुमतः ॥
अग्निष्ष्वात्तानृतुमतोहवामहेनाराशꣳसेसोमपीथꣳयऽआशुः ॥ तेनो

ष्विप्प्रासः सुहवा भवन्तु ष्युयथ्यामुपतं योरयीणाम् ६१ [१३] आ
ऽञ्च्या जानुं ॥ दक्षिणतो निषद्येमं यज्ञमभिगृणीत विश्वे ॥ मा हिंसिष्ट पितरः केनचिन्नो यद्व आगः पुरुषता कराम. ६२ आसीनासो अरुणीनाम् ॥ आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ॥ पुत्रेभ्यः पितरस्तस्य वस्वः प्रयच्छत त इहोर्जं दधात ६३ यमग्ने ॥ कव्यवाहन त्वं चिन्मन्यसे रयिम् ॥ तन्नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ६४ यो अग्निः ॥ कव्यवाहनः पितॄन्यक्षदृतावृधः ॥ प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ६५ त्वमग्ने ॥ त्वमग्न ईडितः कव्यवाहनावाड्ढव्यानि सुरभीणि कृत्वी ॥ प्रादाः पितृभ्यः

स्वधयाते॑ऽअ॒क्षन्न॒द्धित्वन्दे॑व॒प्प्रय॑ताह॒वीᳬषि॑ ६६ येच॑ ॥ येचे॒हपि॑
तरो॒येचु॒नेहयाँश्च॑वि॒द्मयाँ२॥ ऽउ॑चु॒नप्प्र॑वि॒द्म ॥ त्वंवे॑त्थ॒यति॒तेजा॑
तवेदः॒स्व॒धाभि॑र्य॒ज्ञᳬसुकृ॑तञ्जुषस्व ६७ इ॒दम्पि॒तृभ्यो॒नमो॑ऽअस्त्व॒
द्ययेपूर्वा॑सो॒यऽउप॑रास॒ऽई॒युः ॥ येपार्थि॑वे॒रज॒स्यानिष॑त्ता॒येवा॒नूनᳬ
सु॑वृ॒जना॑सुवि॒क्षु ६८ अधा॒यथा॑ ॥ नः॒पित॑रः॒परा॑सः॒प्प्रत्ना॑सो॒ऽअ
ग्नऽऋ॒तमा॑शुषा॒णाः ॥ शुचीद॑य॒न्दीधि॑तिमु॒क्थ॒शासः॒क्षामा॑भि॒न्दन्तो॑
ऽअरु॒णीरप॑व्रन् ६९ उ॒शन्त॑स्त्वा ॥ उ॒शन्त॑स्त्वा॒निधी॑मह्यु॒शन्तः॒स
मि॑धीमहि ॥ उ॒शन्नु॑श॒तऽआव॑हपि॒तॄन्ह॒विषे॒ऽअत्त॑वे ७० अ॒पांफेने॑
न ॥ अ॒पाम्फेने॑नन॒मुचेः॒शिर॑ऽइन्द्रो॒द॑वर्त्तयः ॥ विश्वा॒यद॒जय॒स्स्पृ

धुं ÷ ७१ [ १० ] सोमोराजा ॥ सोमोराजामृतꣳसुतऽऋजीषेणाज
हान्मृत्युम् ॥ ऋतेनंसत्त्यमिन्द्रियम्विपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रि
यमिदम्पयोमृतम्मधु ७२ अद्भ्यःक्षीरम्ः ॥ अद्भ्यःक्षीरंव्यपिबत्क्रुङ्ङा
ङ्गिरसोधिया ॥ ऋतेनंसत्यमिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रि
यमिदम्पयोमृतम्मधु ७३ सोमंमद्भ्यः ॥ सोमंमद्भ्योव्यपिबच्छन्दसा
हꣳसःशुचिषत् ॥ ऋतेनंसत्यमिन्द्रियंविपानꣳशुक्रमन्धसइन्द्रस्ये
न्द्रियमिदम्पयोमृतम्मधु ७४ ११०० कण्डि ॥ ० ॥ अन्नात्परि
स्रुतः ॥ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्रम्पयः सोमम्प्रजा
पतिः ॥ ऋतेनंसत्यमिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमि

संहि. दम्पयोमृतम्मधु ७५ रेतोमूत्रम् ॥ रेतोमूत्रंविजहातियोनिम्प्रविश पू.अ.
१३६ दिन्द्रियम् ॥ गर्भोजरायुणावृतउल्वञ्जहातिजन्मना ॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रमन्धसइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु १९
७६ द्दृष्ट्वारूपे ॥ व्याकरोत्सत्यानृतेप्रजापतिः ॥ अश्रद्धामनृतेदधाच्छ्रद्धाꣳसत्येप्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रमन्धसइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ७७ वेदेनरूपे ॥ व्यपिबत्सुतासुतौप्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रमन्धसइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ७८ दृष्ट्वापरिस्रुतः ॥ दृष्ट्वापरिस्रुतोरसꣳशुक्रेणशुक्रंव्यपिबत्पयःसोमम्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपा १३६

नꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ७९ [ ८ ] सीसेन तन्त्रम्॥ सीसेनतन्त्रम्मनसामनीषिणऽऊर्णासूत्रेणकवयोवयन्ति॥ अश्विनासज्ञꣳसविता सरस्वतीन्द्रस्यरूपंवरुणोभिषज्यन् ८० त दस्य ॥ रूपममृतꣳशचीभिस्तिस्रोदधुर्देवताꣳसꣳरराणाः ॥ लोमा निशष्पैर्बहुधानतोक्मभिस्त्वगस्यमाꣳसमभवन्नलाजाः ८१ तद श्विना ॥ भिषजारुद्रवर्तनीसरस्वतीवयतिपेशोऽअन्तरम् ॥ अ स्थिमज्जानम्मासरैःकारोतरेणदधतोगवान्त्वचि ८२ सरस्वतीमन सा ॥ पेशलंवसुनासत्याभ्यांवयतिदर्शतंवपुः ॥ रसम्परिस्रुतानरो हितन्नमहुर्धीरस्तसरन्नवेमं ८३ पयसाशुक्रम् ॥ पयसाशुक्रममृतंज

निग्न्द्रॅसुरया॑मूत्रा॒ज्जनयन्तुरेतः॑ ॥ अपामतिन्दुर्म्मतिम्बाधमाना॒ऽऊ
बंद्ध्यं॑वातॅंसुब्बुन्तदारात् ८४ इन्द्रः॑सुत्रामाहृदयेनसत्यम्पुरोडाशेन
सवि॒ताजंजान ॥ यकृत्क्लोमानंवरुणोभिषज्ज्यन्मतस्नेवायुब्यैन्नमि
नातिपित्तम् ८५ आन्त्राणिस्थालीः ॥ आन्त्राणिस्थालीम्मर्धुपि
न्न्वंमानागुदाःपात्राणिसुदुघानधेनुः ॥ श्येनस्यपत्रन्नप्लीहाशचीभि
रासन्दीनाभिरुदरन्नमाता ८६ कुम्भोवनिष्ठुः ॥ कुम्भोवनिष्ठुर्ज्जनि
ताशचीभिर्य्यस्मिन्नग्रेयोन्न्याङ्गर्भोऽअन्तः ॥ प्लाशिर्य्यक्तः॑शत
धारऽउत्सोदुहेनकुम्भीस्वधाम्पितृभ्यः॑ ८७ मुखर्ंसत् ॥ मुखर्ंस
दस्यशिरऽइत्सतेनजिह्वापवित्रमश्विनासन्त्सरस्वती ॥ चप्पन्नपा

युर्भिषगस्यवालोबस्तिर्नशेपोहरसातरस्वी ८८ अश्विभ्यांचक्षुः॥ अश्विभ्यांचक्षुरमृतंग्रहाभ्यांछागेनतेजोहविषाशृतेन॥ पक्ष्माणिगोधूमैःकुवलैरुतानिपेशोनशुक्लमसितंवसाते ८९ अविर्न॥ मेषोनासिद्वीर्यायप्राणस्यपन्थाऽअमृतोग्रहाभ्याम्॥ सरस्वत्युपवाकैर्व्यानन्नस्यानिबर्हिर्बदरैर्जजान ९० इन्द्रस्यरूपम्॥ इन्द्रस्यरूपमृषभोबलायकर्णाभ्यांश्रोत्रममृतंग्रहाभ्याम्॥ यवानबर्हिर्भुविकेसराणिकर्कन्धुयज्ञेमधुसारघम्मुखात् ९१ आत्मन्नुपस्थे॥ आत्मन्नुपस्थेनवृकस्यलोममुखेश्मश्रूणिनव्याघ्रलोम॥ केशानशीर्षन्यशसेश्रियैशिखासिंहस्यलोमत्विषिरिन्द्रिया

णि १२ अङ्गान्यात्मन॥ अङ्गान्यात्मन्भिषजातदश्विनात्मा
नमङ्गैःसमंधात्सरस्वती ॥ इन्द्रस्यरूपꣳशतमानमायुश्चन्द्रेणज्ज्यो
तिरमृतन्दधानाः १३ सरस्वतीयोन्यांम् ॥ सरस्वतीयोन्याङ्गर्भम
न्तरश्विभ्यांम्पत्नीसुकृतम्बिभर्ति ॥ अपाꣳरसेनवरुणोनसाम्ने
न्द्रꣳश्रियैजनयन्नप्सुराजा १४ तेजःपशूनाम् ॥ तेजःपशूनाꣳ
हविरिन्द्रियावत्परिस्रुतापयसासारघम्मधु ॥ अश्विभ्यान्दुग्ध
म्भिषजासरस्वत्यासुतासुताभ्यांमृतꣳसोमऽइन्दुः १५ [१६] इ
तिश्रीसंहितापाठएकोनविंशतितमोऽध्यायः १९ क्षत्रस्ययोनिरसियो
दशसद्देवादशाभ्यादधाम्यष्टौयोभूतानांचतस्त्रःसमिद्धइंद्रएकादशायां

त्वष्टौसमिद्धोअग्निर्द्वादशाश्विनाहविस्त्रयोदशाश्विनातेजसैकादशन
वनवतिः ॥ क्षत्त्रस्ययोनिः ॥ क्षत्त्रस्ययोनिरसिक्षत्त्रस्यनाभिरसि ॥
मात्वाहिꣳसीन्मामाहिꣳसीः १ निषंसाद ॥ धृतव्रतोवरुणःपस्त्या
स्वा ॥ साम्म्राज्ज्यायसुक्रतुः॥मृत्योःपाहिविद्योत्पाहि २ देवस्यत्वा॥
सवितुःप्प्रसवेश्श्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ अश्श्विनो
र्ब्भैषज्ज्येनतेजसेब्ब्रह्मवर्च्चसायाभिषिञ्चामिसरस्वत्यैभैषज्ज्येनवी
र्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्श्रियैयशसेभिषि
ञ्चामि ३ कोसि ॥ कतमोसिकस्म्मैत्वाकायत्वा ॥ सुश्श्लोकसुमङ्ग
लसत्त्यराजन् ४ शिरोमे ॥ शिरोमेश्श्रीर्य्यशोमुखन्त्विषिःकेशाश्श्च

श्म्मश्श्रूणि॥राजामेप्प्राणोऽअमृतꣳसम्म्राट्चक्षुर्विराट्श्रोत्त्रम् ५जिह्वामे ॥ भद्द्रंवाङ्महोमनोमन्न्युःस्वराड्भामः ॥ मोदाःप्प्रमोदाऽअङ्गुलीरङ्गानिमित्त्रम्मेसहः ६ बाहूमे ॥ बाहूमेबलमिन्द्रियꣳहस्तौमेकर्म्मवीर्र्यम् ॥ आत्त्माक्षत्त्रमुरोमम ७ पृष्ठीर्म्मे ॥ राष्ट्रमुदरमꣳसौग्ग्रीवाश्श्चश्श्रोणी ॥ ऊरूऽअरत्नीजानुनीविशोमेङ्गानिसर्व्वतः ८ नाभिर्म्मे ॥ चित्तंविज्ञानम्पायुर्म्मेपचितिर्ब्भसत् ॥ आनन्दनन्दावाण्डौमेभगः सौभाग्ग्यम्पसः ॥ जङ्घाब्भ्याम्पद्भ्यान्धर्म्मोस्मिविशिराजाप्प्रतिष्ठितः ९ प्रतिक्षत्त्रे ॥ प्प्रतितिष्ठामिराष्ट्रेप्प्रत्यश्श्वेषुप्प्रतितिष्ठामिगोषु ॥ प्प्रत्यङ्गेषुप्प्रतितिष्ठाम्म्यात्त्मन्प्प्रतिप्प्राणेषुप्प्रतितिष्ठामिपुष्टेप्प्र

तिद्यावापृथिव्योःप्रतितिष्ठामियज्ञे १० त्रयादेवाः॥ त्रयादेवाऽएकादश
त्रयस्त्रिंशाःसुराधसः॥ बृहस्पतिपुरोहितादेवस्यसवितुःसवे॥ देवादे
वैरवन्तुमा ११ प्रथमाद्वितीयैः॥ प्रथमाद्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः
सत्येनसत्यंयज्ञेनयज्ञोयजुर्भिर्यजूंषिसामभिः सामान्यृग्भि
र्ऋचः पुरोनुवाक्याभिःपुरोनुवाक्यायाज्याभिर्याज्यावषट्कारैर्वष
ट्काराऽआहुतिभिराहुतयोमेकामान्त्समर्धयन्तुभूःस्वाहा १२ लो
मानिप्प्रयतिः॥ लोमानिप्प्रयतिर्म्ममत्वङ्मऽआनतिरागतिः॥ मा
ंसम्मऽउपनतिर्वस्वस्थिमज्जामऽआनतिः १३[१३] यद्देवाः॥ य
द्देवादेवहेडनन्देवासश्चकृमावयम्॥ अग्निर्म्मातस्मादेनसोविश्वा

न्मुञ्चत्वꣳहंसः १४ यदिदिवा ॥ यदिदिवायदिनक्तमेनाꣳसिचकृमाव्वयम् ॥ व्वायुर्म्मातस्म्मादेनसोव्विश्श्वान्मुञ्चत्वꣳहंसः १५ यदिजाग्ग्रत् ॥ यदिजाग्ग्रद्यदिस्वप्नऽएनाꣳसिचकृमाव्वयम् ॥ सूर्य्योमातस्म्मादेनसोव्विश्श्वान्मुञ्चत्वꣳहंसः १६ यद्ग्रामे ॥ यद्ग्रामेयदरण्ण्येयत्सभायांयदिन्द्रिये ॥ यच्छूद्रेयदर्य्येयदेनश्चकृमाव्वयंयदेकस्याधिधर्म्मणितस्यावयजनमसि १७ यदापः ॥ यदापोऽअग्घ्न्याऽइतिव्वरुणेतिशपामहेततोव्वरुणनोमुञ्च ॥ अवभृथनिचुम्पुणनिचेरुरसिनिचुम्पुणः ॥ अवदेवैर्द्देवकृतमेनोयक्ष्यवमर्त्यैर्म्मर्त्यकृतम्पुरुराव्णोदेवरिषस्प्पाहि १८ समुद्रेते । समुद्रेतेहृदयमप्प्स्वन्तःसन्त्वा

विशन्त्वोषधीरुतापः ॥ सुमित्रियानऽआपऽओषधयःसन्तुदुर्मि
त्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्मः १९ द्रुपदादिवमु
मुचानःस्विन्नःस्नातोमलादिव ॥ पूतम्पवित्रेणेवाज्यमापःशुन्धन्तु
मैनसः २० उद्वयम् ॥ उद्वयन्तमसस्परिस्वःपश्यन्तऽउत्तरम् ॥ दे
वन्देवत्रासूर्य्यमगन्मज्योतिरुत्तमम् २१ अपोऽअद्य ॥ अपोऽअ
द्यान्वचारिषंरसेनसमसृक्ष्महि ॥ पयस्वानग्नऽआगमन्तम्मासँ
सृजवर्च्चसाप्रजयाचधनेनच २२ एधोसि ॥ एधोस्येधिषीमहिसमि
दसितेजोसितेजोमयिधेहि ॥ समाववर्त्तिपृथिवीसमुषाःसमुसूर्यः
॥ समुविश्श्वमिदञ्जगत् ॥ वैश्श्वानरज्योतिर्भूयासंविभून्कामा

ऽव्यश्नवैभूᳫ्स्वाहा २३ [ १० ] अभ्यादधामि ॥ समिधमग्नेव्व्र
तपतेत्वयि ॥ व्रतञ्चश्रद्धाञ्चोपैमीन्धेत्वादीक्षितोऽअहम् २४ यत्र
ब्रह्म ॥ चक्षत्रञ्चसम्म्यञ्चौचरतᳫसह ॥ तँल्लोकम्पुण्ण्यम्प्रज्ञेषंय्य
त्रदेवाᳫसहाग्निना २५ यत्रेन्द्रः ॥ यत्रेन्द्रश्चवायुश्चसम्म्यञ्चौचर
तᳫसह ॥ तँल्लोकम्पुण्ण्यम्प्रज्ञेषंय्यत्रसेदिर्नविद्यते २६ अᳫशुनाते॥
ऽअᳫशुᳫपृच्यताम्परुषापरुः ॥ गन्धस्तेसोममवतुमदायरसोऽअच्यु
तः २७ सिञ्चन्तिपरि ॥ षिञ्चन्त्युत्सिञ्चन्तिपुनन्तिच ॥ सुरायैब
भ्र्वैमदेकिन्त्वोवदतिकिन्त्वः २८ धानावन्तङ्करम्भिणम् ॥ धाना
वन्तङ्करम्भिणमपूपवन्तमुक्थिनम् ॥ इन्द्रप्प्रातर्जुषस्वनः २९ ब

हदिन्द्राय ॥ गायतमरुतोवृत्रहन्तंमम् ॥ येनुज्ज्योतिरजंनयन्नृतावृ
धोदेवन्देवायुजागृवि ३० अध्वर्य्योऽअद्रिभिः ॥ सुतꣳसोमंम्पवि
त्रऽआनय ॥ पुनाहीन्द्रायपातंवे ३१ [ ८ ] योभूतानाम् ॥ योभूता
नामधिंपतिर्य्यस्मिँल्लोकाऽअधिश्रिताः ॥ यऽईशेमहतोमहाँस्तेनं
गृह्णामित्वामहम्मयिगृह्णामित्वामहम् ३२ उपयामगृंहीतोस्यश्वि
भ्यान्त्वासरस्वत्यैत्वेन्द्रायत्वासुत्राम्णऽएषतेयोनिरश्विभ्या
न्त्वासरस्वत्यैत्वेन्द्रायत्वासुत्राम्णे ३३ प्राणपामे ॥ ऽअपानपाश्च
क्षुष्पाःश्रोत्रपाश्चमे ॥ वाचोमेविश्वभेषजोमनसोसिविलायं
कः ३४ अश्विनंकृतस्यते ॥ अश्विनंकृतस्यतेसरंस्वतिकृतस्ये

न्द्रेणसुत्राम्म्णांकृतस्यं ॥ उपंहूतुऽउपंहूतस्यभक्षयामि ३५ [ ४ ]
समिंद्धुऽइन्द्रंः ॥ समिंद्धुऽइन्द्रंऽउुषसामनींकेपुरोरुचांपूर्व्वंकृद्वावृधानः
॥ त्रिभिर्द्देवैस्त्रिर्ठ्शतावज्जंबाहुर्ज्जघानंवृत्रंविदुरोंववार ३६ नराशर्ठ्सुः
प्प्रतिं ॥ नराशर्ठ्सुःप्प्रतिशूरोमिमांनुस्तनूनपात्प्रतिंयुज्ञस्युधामं ॥ गो
भिर्व्वपावान्मधुंनासमुञ्जन्हिरंण्ण्यैश्चुन्द्रीयंजतिप्प्रचेताः ३७ ईडि
तोदेवैः ॥ ईडितोदेवैर्हरिवाँःऽअभिष्टिराजुह्वानोहुविषाशर्द्धमानः ॥
पुरन्दरोगोंत्रभिद्वज्जंबाहुरायांतुयुज्ञमुपंनोजुषाणः ३८ जुषाणोबु
र्हिः ॥ जुषाणोबुर्हिर्हरिंवान्नुऽइन्द्रंःप्प्राचीनंर्ठ्सीदत्प्रुदिशांपृथिव्याः
॥ उरुप्प्रथाःप्प्रथंमानर्ठ्स्योनमांदित्यैरक्तंवसुंभिःसुजोषाः ३९

इन्द्रन्दुरः॥ कवष्योधावमानावृषांणंरुषन्तुजनंयःसुपत्नीः ॥ द्वारोदेवीरभितोवि्वश्रयन्ताःसुवीरांवीरम्प्रथमानामहोभिः ४० उषासानक्ता॥ बृहतीबृहन्तुम्पयस्वतीसुदुघेशूरमिन्द्रम् ॥ तन्तुन्ततम्पेशसासंवयन्तीदेवानान्देवंयजतःसुरुक्मे ४१ दैव्यामिमाना ॥ मनुषःपुरुत्राहोतारावि्न्द्रम्प्रथमासुवाचा॥ मूर्द्धन्यज्ञस्यमधुनादधानाप्राचीनञ्ज्योतिर्हविषांवृधातः ४२ तिस्रोदेवीः॥ तिस्रोदेवीर्हविषावर्द्धमानाऽइन्द्रंजुषाणाजनयोनपत्नीः ॥ अच्छिन्नन्तन्तुम्पयसासरस्वतीडादेवीभारतीवि्वश्वतूर्त्तिः ४३ त्वष्टादधत् ॥ त्वष्टादधच्छुष्ममिन्द्रायवृष्णेपाकोचिष्टुर्यशसेपुरूणि ॥ वृषायजन्वृषणम्भू

रिरेतामुर्द्धन्यज्ञस्यसमनक्तुदेवान् ४४ वनस्पतिरवसृष्टः ॥ वनु
स्पतिरवसृष्टोनपाशैस्त्मन्यासमञ्जञ्छमितानदेवः ॥ इन्द्रस्यहव्यै
र्जठरम्पृणानःस्वदातियज्ञम्मधुनाघृतेन ४५ स्तोकानामिन्दुम् ॥
स्तोकानामिन्दुम्प्रतिशूरऽइन्द्रोवृषायमाणोवृषभस्तुराषाट् ॥ घृत
प्रुषामनसामोदमानाःस्वाहादेवाऽअमृतामादयन्ताम् ४६ [ ११ ]
आयातु ॥ आयात्विन्द्रोवसऽउपनऽइहस्तुतःसधमादस्तुशूरः ॥ वा
वृधानस्तविषीर्यस्यपूर्वीर्द्यौर्नक्षत्रमभिभूतिपुष्यात् ४७ आनः ॥
आनऽइन्द्रोदूरादानऽआसादभिष्टिकृदवसेयासदुग्रः ॥ ओजिष्ठेभि
र्नृपतिर्वज्रबाहुःसङ्गेसमत्सुतुर्वणिःपृतन्यून् ४८ आनः ॥ आनु

ऽइन्द्रोहरिंभिऋर्याल्व॒ङ्ख्रांर्वाचीनोवं॒सुराधं॒संच ॥ तिष्ठांतिव्र॒ज्जीमु॒घवां॒ विरप्प्शीमंऋ॒युज्ञमनुं॒नोव्रांजंसातौ ४९ त्रातारमिन्द्र॑म् ॥ त्रातार॒ मिन्द्र॑मवि॒तारमिन्द्र॒ꣳहवेंहवेसु॒हव॒ꣳशूरमिन्द्र॑म् ॥ ह्वयांमिश॒क्रम्पुरु॒ हूतमिन्द्र॒ꣳस्व॒स्तिनोंम॒घवांधा॒त्विन्द्रः॑ ५० इन्द्रः॑सु॒त्रामा॑ ॥ इन्द्रः॑ सु॒त्रामा॒स्ववाँ॒ꣳ॥ऽअवौभिः॑सुमृ॒डीकोभंवतुवि॒श्ववेदाः ॥ बाधंता॒न्द्वे॒ षोऽअभंयङ्कृणोतुसु॒वीर्य॑स्यु॒पतंयःस्याम ५१ तस्यंव॒यम् ॥ तस्यं व॒य ६ सुंम॒तौय॒ज्ञियस्यापिंभ॒द्रेसौंमन॒सेस्यांम॥ससु॒त्रामा॒स्ववा॒ꣳ॥ ऽइन्द्रोऽअ॒स्म्मेऽआ॒राच्चि॒द्द्वेषः॑सनु तऽर्युयोतु ५२ आम॒न्द्रैः ॥ आम॒ न्द्रैरिन्द्रहरिंभिऋर्याहिम॒यूररोमभिः ॥ मात्वाकेचि॒न्नियंम॒न्विन्नपा॒

शिनोतिधन्वैवृताँ२॥ऽइहि ५३ एवेत् ॥ एवेदिन्द्रंवृषणंवज्रबाहुंवसि
ष्ठासोऽअभ्यर्चन्त्यर्कैः ॥ सनस्तुतोवीरवद्धातुगोमद्यूयम्पातस्व
स्तिभिःसदानः ५४ [ ८ ] समिद्धोऽअग्निः ॥ समिद्धोऽअग्निर
श्विनातप्तोघर्म्मोविराट्सुतः ॥ दुहेधेनुःसरस्वतीसोमꣳशुक्रमिहे
न्द्रियम् ५५ तनूपाभिषजा ॥ सुतेश्विनोभासरस्वती ॥ मध्वार
जाꣳसीन्द्रियमिन्द्रायपथिभिर्वहान् ५६ इन्द्रायेन्दुम् ॥ इन्द्रायेन्दु
ꣳसरस्वतीनराशꣳसेननग्नहुम् ॥ अधातामश्विनामधुभेषजम्भि
षजासुते ५७ आजुह्वानासरस्वती ॥ न्द्रायेन्द्रियाणिवीर्यम् ॥
इडाभिरश्विनाविषꣳसमूर्जꣳसꣳरयिन्दधुः ५८ अश्विनानमुचेः ॥

सुतꣳसोमꣳशुक्रम्परिस्रुता ॥ सरस्वतीतमाभरद्बर्हिषेन्द्रायपातवे ५९
कवष्योन ॥ व्यचस्वतीरश्विभ्यान्नदुरोदिश ÷ ॥ इन्द्रोनरोदसी
ऽउभेदुहेकामान्त्सरस्वती ६० उषासानक्तम् ॥ उषासानक्तमश्विना
दिवेन्द्रꣳसायमिन्द्रियैः ॥ सञ्जानानेसुपेशसासमञ्जातेसरस्वत्या
६१ पा[illegible]नं ÷ ॥ पातन्नोऽअश्विनादिवापाहिनक्तꣳसरस्वती ॥ दै
व्याहोताराभिषजापातमिन्द्रꣳसचासुते ६२ तिस्रस्त्रेधा ॥ सरस्व
त्यश्विनाभारतीडा ॥ तीव्रम्परिस्रुतासोममिन्द्रायसुषुवुर्मदम् ६३
अश्विनाभेषजम् ॥ अश्विनाभेषजम्मधुभेषजन्नःसरस्वती ॥
इन्द्रेत्वष्टायशःश्रियꣳरूपꣳरूपमधुःसुते ६४ ऋतुथेन्द्र ÷ ॥ ऋतुथेन्द्रो

संहि. पू.अ.
१४५ २०

वनुस्पतिं÷शशमानःपरिस्रुतां ॥ कीलालमुश्विभ्याम्मधुदुहेधे
नुःसरस्वती ६५ गोभिर्न ॥ सोमम्मश्विनामासरेणपरिस्रुतां ॥ स
मधात्सरस्वत्यास्वाहेन्द्रेसुतम्मधु ६६[१२]अश्विनाहविः॥ अ
श्विनाहविरिन्द्रियन्नमुचेर्धियासरस्वती ॥ आशुक्रमासुराद्वसुमघ
मिन्द्रायजभ्रिरे ६७ यमश्विनां ॥ यमश्विनासरस्वतीहविषेन्द्र
मवर्द्धयन् ॥ सबिभेदबलम्मघन्नमुचावासुरेसचा ६८ तमिन्द्रम् ॥
तमिन्द्रम्पशवःसचाश्विनोभासरस्वती ॥ दधानाऽअभ्यनूषत
हविषायज्ञऽइन्द्रियैः ६९ यऽइन्द्रे ॥ यऽइन्द्रऽइन्द्रियन्दधुःसविताव
रुणोभगः ॥ ससुत्रामाहविष्पतिर्यजमानायसश्चत ७० सुवि

१४५

तावरुणः ॥ सुवितावरुणोदधद्यजमानायदाशुषे ॥ आदत्तनमुचेर्व्वसुसुत्रामाबलमिन्द्रियम् ७१ वरुणःक्षत्रम् ॥ वरुणःक्षत्रमिन्द्रियम्भगेनसवितात्श्रियम् ॥ सुत्रामायशसाबलन्दधानायज्ञमाशत ७२ अश्विनागोभिः ॥ अश्विनागोभिरिन्द्रियमश्वेभिर्व्वीर्य्यम्बलम् ॥ हविषेन्द्रःसरस्वतीयजमानमवर्द्धयन् ७३ तानासत्या ॥ सुपेशसाहिरण्यवर्त्तनीनरा ॥ सरस्वतीहविष्मतीन्द्रकर्म्मसुनोवत ७४ ताभिषजा ॥ सुकर्म्मणासासुदुघासरस्वती ॥ सवृत्रहाशतक्रतुरिन्द्रायदधुरिन्द्रियम् ७५ युवःसुरामम् ॥ युवःसुराममश्विनानमुचावासुरेसचा ॥ विपिपानाःसरस्वतीन्द्रङ्कर्म्मस्वावत ७६ पुत्रमिव

पितरौ ॥ पुत्रमिवपितरावुश्विनोभेन्द्रावथुःकाव्यैर्दꣳसनाभिः ॥
सत्सुराममंव्यापिबुःशचीभिःसरंस्वतीत्त्वामघवन्नभिष्णक् ७७ य
स्मिन्नुन्नश्श्वासः॥ यस्मिन्नुन्नश्श्वासऽऋषुभासंऽउुक्षणोवुशामेषाऽअं
वसृष्टासुऽआहुताः ॥ कीलालुपेसोमंपृष्ठायवेधसेंहृदामतिंजंनयुचा
रुमुग्ग्नये ७८ अहाव्यग्ने ॥ हुविरास्येतेस्रुचीवघृतञ्चुम्म्वीवुसोमः॥
वाजुसनिꣳरुयिमुस्म्मेसुवीरम्प्रशस्तन्धेहियुशसम्बृहन्तंम् ७९[१३]
शतम् १२०० अुश्विनातेजंसा ॥ चक्षुःप्प्राणेनुसरंस्वतीवीुर्य्यम्
॥ वाचेन्द्रोबलेनेंद्रायदधुरिन्द्रियम् ८० गोमदूुषुणासत्त्या ॥ गोमदू
षुणासुत्त्याश्श्वावद्यातमश्श्विना ॥ वर्त्तीरुद्रानृपाय्यम् ८१ नयत॥

नयत्परोनान्तरऽआदधर्षद्वृषण्वसू ॥ दुःशंसोमर्त्योरिपुः ८२ ता
नः ॥ तानुऽआवोढमश्विनारयिम्पिशङ्गसन्दृशम् ॥ धिष्ण्यावरि
वोविदम् ८३ पावकानः ॥ पावकानःसरस्वतीवाजेभिर्वाजिनीव
ती ॥ यज्ञंवष्टुधियावसुः ८४ चोदयित्रीसूनृतानाम् ॥ चोदयित्रीसू
नृतानाञ्चेतन्तीसुमतीनाम् ॥ यज्ञन्दधेसरस्वती ८५ महोऽअर्णः ॥
महोऽअर्णःसरस्वतीप्रचेतयतिकेतुना ॥ धियोविश्वाविराजति
८६ इन्द्रायाहि ॥ चित्रभानोसुताऽइमेत्वायवः ॥ अण्वीभिस्तना
पूतासः ८७ इन्द्रायाहि ॥ धियेषितोविप्रजूतःसुतावतः ॥ उपब्र
ह्माणिवाघतः ८७ इन्द्रायाहि ॥ इन्द्रायाहितूतुजानऽउपब्रह्माणि

हरिवः ॥ सुतेदंधिष्ष्वनुश्च्वनंः ८९ अश्विनापिबताम् ॥ अश्विनापिबतुम्मधुसरंस्वत्त्यासुजोषंसा ॥ इन्द्रंःसुत्रामांवृत्रहाजुषंत्तांᳫंसोम्म्यम्मधुं १० [ ११ ] इतिवाजसनेयसंहितापाठेविंशोऽध्याय २० ॥ छ ॥



॥ श्रीगणेशायनमः ॥ हरिः ॐम् ॥ इमम्मेसमिद्धोअग्निरेकादशकौ
वसंतेनऋतुनाषड्ढोतावक्षत्समीधाग्निंद्वादशाश्विनौछागस्यसप्तदेवंब
र्हिश्चतुर्द्दशाषडेकषष्टिः ॥ इमम्मेंवरुणश्श्रुधीहवंमुद्याचंमृडय ॥ त्वा
मंवस्युराचके १ तत्त्वा ॥ यामिब्रह्मणावन्दंमानस्तदाशास्तेयजमा
नोहविर्भिः ॥ अहेडमानोवरुणेहबोद्ध्युरुशꣳसमानऽआयुःप्रमो
षीः २ त्वन्नः ॥ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासि
सीष्ठाः ॥ यजिष्ठोवन्हितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्य
स्म्मत् ३ सत्वम् ॥ सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोअस्याऽउषसो
व्युष्टौ ॥ अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनऽएधि ॥४

मुहीमूषु ॥ मातरꣳसुव्रतानामृतस्यपत्नीमवसेहुवेम ॥ तुविक्षत्रामु
जरन्तीमुरूचीꣳसुशर्म्माणमदितिꣳसुप्रणीतिम् ५ सुत्रामाणम्पृथि
वीम् ॥ सुत्रामाणम्पृथिवीन्द्यामनेहसꣳसुशर्म्माणमदितिꣳसुप्रणी
तिम् ॥ दैवीन्नावꣳस्वरित्रामनागसमस्रवन्तीमारुहेमास्वस्तये ॥ ६
सुनावमारुहेयम् ॥ सुनावमारुहेयमस्रवन्तीमनागसम् ॥ शतारित्रा
ꣳस्वस्तये ७ आनः ॥ आनोमित्रावरुणाघृतैर्ग्गव्यूतिमुक्षतम् ॥
मद्ध्वारजाꣳसिसुक्रतू ८ प्रबाहवा ॥ सिसृतञ्जीवसेनऽआनोगव्यूति
मुक्षतङ्घृतेन ॥ आमाजनेश्रवयतंयुवानाश्रुतम्मेमित्रावरुणाहवे
मा ९ शन्नः ॥ शन्नोभवन्तुवाजिनोहवेषुदेवतातामितद्रवꣳस्वर्क्काः ॥

जृम्भयन्तोहिं॑वृक॑ᳪ᳭रक्षांᳪ᳭सिसनेम्म्युस्म्मद्युंयवुन्नमीवाः १० व्वाजेवाजेवत ॥ व्वाजिनोनुोधनेषुविप्प्राऽअमृताऽऋतज्ञाः ॥ अस्यमद्धंःपिबतमादयंद्धन्तृप्प्तायातपथिभिर्देवुयानैः ११ समिद्धोऽअग्निः ॥ समिधासुसमिद्धोवरेण्यः ॥ गायत्रीच्छन्दऽइन्द्रियन्त्र्यविर्गौर्व्वयोदधुः १२ तनूनपाच्छुचिव्व्रतः ॥ तनूनपाच्छुचिव्व्रतस्तनूपाश्चसरस्वती ॥ उष्णिहाछन्दऽइन्द्रियन्दित्यवाड्गौर्व्वयोदधुः १३ इडाभिराग्निः ॥ इडाभिरग्निरीड्यःसोमोदेवोऽअमर्त्यः ॥ अनुष्टुप्छन्दऽइन्द्रियम्पञ्चाविर्गौर्व्वयोदधुः १४ सुबर्हिराग्निः ॥ पूषण्वान्स्तीर्णबर्हिरमर्त्यः ॥ बृहतीच्छन्दऽइन्द्रियन्त्रिवत्सोगौर्व्वयोदधुः १५ दुरोदेवीः ॥ दुरोदेवी

ढ्दिशोमुहीर्ब्रह्मादेवोबृहुस्प्पतिः ॥ पाङ्क्तिश्छन्दऽइहेन्द्रियन्तुर्य्यवाङ्गौर्व्वयोदधुः १६ उषेसुह्वीसुपेशंसाविश्वेदेवाऽअमर्त्याः ॥ त्रिष्टुप्छन्दऽइहेन्द्रियम्पष्ठवाङ्गौर्व्वयोदधुः १७ दैव्याहोतारा ॥ भिषजेन्द्रेणसयुजासुजा ॥ जगतीच्छन्दऽइन्द्रियमनुड्वान्गौर्व्वयोदधुः १८ तिस्रऽइडा ॥ तिस्रऽइडासरस्वतीभारतीमरुतोविशः ॥ विराट्छन्दऽइहेन्द्रियन्धेनुर्गौर्न्नवयोदधुः १९ त्वष्टातुरीपः ॥ त्वष्टातुरीपोऽअद्भुतऽइन्द्राग्नीपुष्टिवर्द्धना ॥ द्विपदाच्छन्दऽइन्द्रियमुक्षागौर्न्नवयोदधुः २० शमितानः ॥ शमितानोवनस्प्पतिःसवितापसुवन्भगम् ॥ककुप्छन्दऽइहेन्द्रियंवशावेहद्वयोदधुः २१ स्वाहायज्ञंवरुणः सुक्षत्रोभेषज

ड्ंरत् ॥ अतिच्छन्दाऽइन्द्रियम्बृहदृषभोगौर्व्वयोदधुः २२ [११] व
सन्तेनऽऋतुना ॥ देवावसवस्त्रिवृतास्तुताः ॥ रथन्तरेणतेजसाहविरि
न्द्रेवयोदधुः २३ ग्रीष्मेणऽऋतुना ॥ देवारुद्राःपञ्चदशेस्तुताः ॥ बृ
हतायशसाबलᳫंहविरिन्द्रेवयोदधुः २४ वर्षाभिर्ऋतुनादित्यास्तोमे
सप्तदशेस्तुताः ॥ वैरूपेणविशौजसाहविरिन्द्रेवयोदधुः २५ शार
देनऽऋतुना ॥ देवाऽएकविᳫंशऽऋभवस्तुताः ॥ वैराजेनश्रियाश्रि
यᳫंहविरिन्द्रेवयोदधुः २६ हेमन्तेनऽऋतुना ॥ देवास्त्रिणवेमरुतस्तुताः ॥
बलेनशक्वरीःसहोहविरिन्द्रेवयोदधुः २७ शैशिरेणऽऋतुना ॥ देवास्त्रय
स्त्रिᳫंशेमृतास्तुताः ॥ सत्येनरेवतीःक्षत्रᳫंहविरिन्द्रेवयोदधुः २८ [६]

होतायक्षत् ॥ होतायक्षत्सुमिधाग्निमिडस्पुदेश्विनेन्द्रꣳसरस्वतीम्
जोधूम्म्रोनगोधूमैः कुवलैर्भेषुजम्मधुशष्पैर्न्नतेजऽइन्द्रियम्पयः
सोमः परिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतुर्य्यज ॥ २९ ॥ होतायक्षत्तनू
नपात्सरस्वतीम् ॥ होतायक्षत्तनूनपात्सरस्वतीमविम्मेषोनभेषुजम्पु
थामधुमताभरन्नश्विनेन्द्रायवीर्य्यम्बदरैरुपवाकाभिर्भेषुजन्तो
क्मभिः पयः सोमः परिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतुर्य्यज ॥ ३० ॥
होतायक्षन्नराशꣳसन्न ॥ नग्नहुम्पतिꣳसुरयाभेषुजम्मेषः सरस्वती
भिषग्रथोनचन्द्र्यश्विनोर्व्वपाऽइन्द्रस्यवीर्य्यम्बदरैरुपवाकाभिर्भे
षुजन्तोक्मभिः पयः सोमः परिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतु

संहि.

४

ऊर्ज्जं ३१ होतां यक्षद्दिडेड्डितः ॥ होता यक्षदिडेडित ऽ आजुह्वानः सरस्वतीमिन्द्रम्बलेन वर्द्धयन्नृषभेणगवेन्द्रियमश्विनेन्द्राय भेषजं यवैः कर्क्कन्धुभिर्म्मधुलाजैर्न्न मासरम्पयः सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्ज्यस्य होतर्य्यज ३२ होता यक्षद्बर्हिरूर्णम्म्रदाः॥ होता यक्षद्बर्हिरूर्णम्म्रदा भिषङ्नासत्त्या भिषजाश्विनाश्वा शिशुमती भिषग्धेनुः सरस्वती भिषग्दुह ऽ इन्द्राय भेषजम्पयः सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्ज्यस्य होतर्य्यज ३३ होता यक्षद्दुरो दिशः कवष्ष्यो न व्यचस्वतीरश्विभ्यान्न दुरो दिश ऽ इन्द्रो न रोदसी दुघे दुहे धेनुः सरस्वत्यश्विनेन्द्राय भेषजः शुक्रन्न ज्ज्योतिरिन्द्रियम्पयः सोमः परिस्रुता

उ.अ.

२१

४

घृतम्मधुमद्यन्त्वाज्ज्यंस्यहोतुर्य्यजं ३४ होतायक्षत्सुपेशंसोषैनक्त्तन्दिवाश्विनासमंञ्जातेसरंस्वत्यास्त्विषिमिन्द्रेनभेषजᳩश्येनोनरजंसाहृदाश्श्रियानमासंरम्पयुङ्सोमं॑पारिस्रुताघृतम्मधुमद्यन्त्वाज्ज्यंस्यहोतुर्य्यजं ३५ होतायक्षद्दैव्याहोतारा ॥ भिषजाश्विनेन्द्रन्नजागृविदिवानक्तन्नभेषजैःशूषुᳩसरंस्वतीभिषकरसीसेनदुहऽइन्द्रियम्पयुङ्सोमं॑पारिस्रुताघृतम्मधुमद्यन्त्वाज्ज्यंस्यहोतुर्य्यजं ३६ होतायक्षत्तिस्रोदेवीः ॥ होतायक्षात्तिस्रोदेवीर्न्नभेषजन्त्रयंस्त्रिधातवोपसोरूपमिन्द्रेहिरण्णयंमश्विनेडानभारंतीवाचासरंस्वतीमहऽइन्द्रायदुहऽइन्द्रियम्पयुङ्सोमं॑पारिस्रुताघृतम्मधुमद्यन्त्वाज्ज्यंस्यहोतुर्य्यजं ३७

होतायक्षत्सुरेतसमृषभम् ॥ होतायक्षत्सुरेतसमृषभन्नर्यापसन्त्वष्टा
रमिन्द्रमश्विनाभिषजन्नसरस्वतीमोजोनजूतिरिन्द्रियंवृकोनरभ
सोभिषग्ग्यशःसुरयाभेषजꣳश्रियानमासरम्पयःसोमःपरिस्रुताघृ
तम्मधुव्यन्त्वाज्यस्यहोतर्यज ३८ होतायक्षद्बृहस्पतिꣳशमितार
म् ॥ होतायक्षद्बृहस्पतिꣳशमितारꣳशतक्रतुम्भीमन्नमन्युꣳराजानं
व्याघ्रन्नमसाश्विनाभामꣳसरस्वतीभिषगिन्द्रायदुहऽइन्द्रियम्प
यःसोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्यज ३९ होतायक्ष
दग्निꣳस्वाहा ॥ होतायक्षदग्निꣳस्वाहाज्यस्यस्तोकानाꣳस्वाहामे
दसाम्पृथक्स्वाहाच्छागमश्विभ्याꣳस्वाहामेषꣳसरस्वत्यैस्वाह

ऽऋषभमिन्द्राय सिꣳहाय सहसऽइन्द्रियꣳ स्वाहाग्निम्भेषजꣳ स्वाहा
सोममिन्द्रियꣳ स्वाहेन्द्रꣳ सुत्रामाणꣳ सवितारं वरुणम्भिषजाम्पतिꣳ
स्वाहा वनस्पतिम्प्रियम्पाथो न भेषजꣳ स्वाहा देवाऽआज्यपा जुषा
णोऽअग्निर्भेषजम्पयः सोमः परिस्रुता घृतम्मधु व्यन्त्वाज्यस्य होत
र्यज ४० [ १२ ] होता यक्षदश्विनौ च्छागस्य ॥ वपाया मेदसो
जुषेताꣳ हविर्होतर्यज ॥ होता यक्षत्सरस्वतीम्मेषस्य वपाया मेदसो
जुषताꣳ हविर्होतर्यज ॥ होता यक्षदिन्द्रमृषभस्य वपाया मेदसो जुष
ताꣳ हविर्होतर्यज ४१ होता यक्षदश्विनौ सरस्वतीम् ॥ होता यक्ष
दश्विनौ सरस्वतीमिन्द्रꣳ सुत्रामाणमिमे सोमाः सुरामाणश्छागैर्न मे

षेर्क्षुभैःसुताःशष्पैर्न्नतोक्मभिर्लाजैर्म्महस्वन्तोमदामासरेणपरि
ष्कृताःशुक्राःपयस्वन्तोमृताःप्प्रस्थितावोमधुश्च्युतस्तानश्विना
सरस्वतीन्द्रःसुत्रामावृत्रहाजुषन्ताᳪंसोम्म्यम्मधुपिबन्तुमदन्तुव्य
न्तुहोतर्य्यज॥४२॥होताषक्षदश्विनौछागस्य।हविषऽआत्तामद्यमद्ध्य
तोमेदऽउद्भृतम्पुराद्वेषोब्भ्यःपुरापौरुषेय्यागृभोघस्तान्नूनङ्घासेऽअ
ज्राणांय्यवसप्प्रथमानाᳪंसुमत्क्षराणाᳪं शतरुद्रियाणामग्निष्वा
त्तानाम्पीवोपवसनानाम्पार्श्वतःश्रोणितःशितामतऽउत्सादतोङ्गा
दङ्गादवत्तानाङ्करतऽएवाश्विनाजुषेताᳪंहविर्होतर्य्यज ॥४३॥ होताष
क्षत्सरस्वतीम्मेषस्यहविषऽआवयदद्यमद्ध्यतोमेदऽउद्भृतम्पुराद्वेषो

ऽभ्यः पुरापौरुषेय्या गृभो घस्न्नूनङ्घासेऽअज्ज्राणां य्यवसप्रथमाना सुमत्क्षराणा शतरुद्रियाणामग्निष्वात्तानाम्पीवोपवसनानाम्पार्श्वतः श्रोणितः शितामतऽउत्सादतोङ्गादङ्गादवत्तानाङ्करदेवं सरस्वतीजुषतां हविर्होतर्यज ॥ ४४ ॥ होता यक्षदिन्द्रमृषभस्य हविषऽआवयदद्य मध्यतो मेदऽउद्भृतम्पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्न्नूनङ्घासेऽअज्ज्राणां य्यवसप्रथमाना सुमत्क्षराणा शतरुद्रियाणामग्निष्वात्तानाम्पीवोपवसनानाम्पार्श्वतः श्रोणितः शितामतऽउत्सादतोङ्गादङ्गादवत्तानाङ्करदेवमिन्द्रो जुषतां हविर्होतर्यज ॥ ४५ ॥ होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाधित । यत्राश्विं

सं.हि. नोश्छागस्यहविषः प्रियाधामानियत्रसरस्वत्यामेषस्यहविषःप्रि उ.अ.

७ याधामानियत्रेन्द्रस्यऽऋषभस्यहविषःप्रियाधामानियत्राग्नेःप्रि २१

याधामानियत्रसोमस्यप्रियाधामानियत्रेन्द्रस्यसुत्राम्णःप्रिया

धामानियत्रसवितुःप्रियाधामानियत्रवरुणस्यप्रियाधामानिय

त्रवनस्पतेःप्रियापाथाᳪंसियत्रदेवानामाज्यपानाम्प्रियाधामा

नियत्राग्नेर्होतुःप्रियाधामानितत्रैतान्प्रस्तुत्येवोपस्तुत्येवोपावस्रक्ष

द्रभीयसऽइवकृत्वीकरदेवन्देवोवनस्पतिर्जुषताᳪंहविर्होतुर्यज

४८ होतासक्षदग्निᳪंस्विष्टकृतम् ॥ होतासक्षदग्निᳪंस्विष्टकृतमयाड ७

ग्निरश्विनोश्छागस्यहविषःप्रियाधामान्ययाट्सरस्वत्यामेषस्यह

विषं॑÷प्प्रि॒याधामा॒न्यया॒ऽइन्द्र॑स्यऽऋष॒भस्य॑ह॒विषं॑÷प्प्रि॒याधामा॒न्य
यां॑ऽइ॒ग्ने॒ऽप्प्रि॒याधामा॒न्यया॒ऽह्वो॒मस्य॑प्प्रि॒याधामा॒न्यया॒ऽइन्द्र॑स्यसु॒त्रा
म्म्णं॑÷प्प्रि॒याधामा॒न्यया॑ऽह्व॒वि॒तुऽप्प्रि॒याधामा॒न्यया॒ऽव्व॒रु॑णस्य॑प्प्रि॒या
धामा॒न्यया॒ऽव्व॒नस्प॒तेऽप्प्रि॒यापाथा॒ᳪ॒स्यया॑ऽदे॒वाना॑माज्य॒पाना॒म्प्प्रि
याधामा॑नि॒यक्षं॑द॒ग्नेहो॑तुं÷प्प्रि॒याधामा॑नि॒यक्ष॒त्स्वम्म॑हि॒मान॒माय॑ज
तु॒मेज्ज्या॒ऽइषं॑÷कृ॒णोतु॒सोऽअ॑ह्वराज॒तवे॑दाजु॒षता॒ᳪ॑ह॒विर्हो॑त॒र्य्यज
४७ [ ७ ] दे॒वम्ब॒र्हिःऽसर॑स्वतीसु॒दे॒वमिन्द्रे॑ऽअ॒श्श्विना॑ ॥ तेजो॒नच
क्षु॑रक्ष्यो॒र्ब्ब॒र्हिषा॑दधु॒रिन्द्रि॒यंव्व॑सु॒वने॑व्वसु॒धेय॑स्यव्यन्तु॒यज ४८ दे॒वी
र्द्वार॑÷ ॥ दे॒वीर्द्वारो॑ऽअ॒श्श्विना॑भि॒षजेन्द्रे॒सर॑स्वती ॥ प्रा॒णन्नवी॒र्य्यन्न

सिद्धारोंदधुरिन्द्रियंवंसुवनेवसुधेयंस्यव्यन्तुयजं ४९ देवीऽउषासौ ॥ देवीऽउषासांवुश्विनासुत्रामेन्द्रेसरस्वती ॥ बलन्नवाचमास्यऽउषाभ्यांन्दधुरिन्द्रियंवसुवनेवसुधेयंस्यव्यन्तुयजं ५० देवीजोष्ट्री ॥ देवीजोष्ट्रीसरस्वत्युश्विनेन्द्रमवर्द्धयन् ॥ श्रोत्रन्नकर्णयोर्यशोजोष्ट्रीभ्यान्दधुरिन्द्रियंवसुवनेवसुधेयंस्यव्यन्तुयजं ५१ देवीऽऊर्जाहुती ॥ देवीऽऊर्जाहुतीदुघेसुदुघेन्द्रेसरस्वत्युश्विनाभिषजावतः ॥ शुक्रन्नज्योतिस्तनयोराहुतीधत्तऽइन्द्रियंवसुवनेवसुधेयंस्यव्यन्तुयजं ५२ देवादेवानाम् ॥ देवादेवानान्भिषजाहोताराविन्द्रमुश्विना ॥ वषट्कारैःसरस्वतीत्विषिन्नहृदयेमतिंहोतृभ्यान्दधुरिन्द्रियंवसुव

नैवसुधेयंस्यव्यन्तुयज ५३ देवीस्तिस्रः ॥ देवीस्तिस्रस्तिस्रोदेवीर
श्विनेडासरस्वती ॥ शूषन्नमध्येनाश्विभ्यामिन्द्रायदधुरिन्द्रियंवसु
वनेवसुधेयंस्यव्यन्तुयज ५४ देवऽइन्द्रः ॥ देवऽइन्द्रोनराशंसस्त्रि
वरूथःसरस्वत्याश्विभ्यामीयतेरथः ॥ रेतोनरूपममृतंजनित्रमि
न्द्रायत्वष्टादधदिन्द्रियाणिवसुवनेवसुधेयंस्यव्यन्तुयज ५५ देवोदेवैः
॥ देवोदेवैर्वनस्पतिर्हिरण्यपर्णोऽअश्विभ्याꣳसरस्वत्यासुपिप्प
लऽइन्द्रायपच्यतेमधु ॥ ओजोनजूतिर्ऋषभोनभामंवनस्पतिर्नो
दधदिन्द्रियाणिवसुवनेवसुधेयंस्यव्यन्तुयज ५६ देवम्बर्हिः ॥ देव
म्बर्हिर्वारितीनामध्वरेस्तीर्णमश्विभ्यामूर्णम्रदाःसरस्वत्यास्यो

सं॰हि॰ नमिन्द्रंतेसदः॑ ॥ ईशायैमुन्युꣳराजानम्बर्हिषांदधुरिन्द्रियंवसुवनेव उ.अ.

१ सुधेयंस्यव्यन्तुयज ५७ देवोऽअग्निःस्विष्टकृद्देवान्यक्षद्यथायुथꣳहो २१

ताराविन्द्रमुश्विनावाचावाचꣳ सरस्वतीमुग्निꣳ सोमꣳस्विष्टकृ

त्स्विष्टऽइन्द्रःसुत्रामासवितावरुणोभिषगिष्टोदेवोवनस्पतिःस्विष्टादे

वाऽआज्यपाःस्विष्टोऽअग्निरग्निनाहोताहोत्रेस्विष्टकृद्यशोनदधदि

न्द्रियमूर्जमपचितिꣳस्वधांवसुवनेवसुधेयस्यव्यन्तुयज ५८ अ

ग्निमुद्यहोतारमवृणीतायंयजमानःपचन्पक्तीःपचन्पुरोडाशान्ब

ध्नन्नश्विभ्यांछागꣳ सरस्वत्यैमेषमिन्द्रायऽऋषभꣳ सुन्वन्न १

श्विभ्याꣳसरस्वत्याऽइन्द्रायसुत्राम्णेसुरासोमान्त्सूपस्थाऽअ

द्य ५९ सूपस्था ऽअद्य देवो वनस्पतिरभवदश्विभ्यां छागेन सरस्वत्यै मेषेणेन्द्राय ऽऋषभेणाक्षँस्तान्मेदस्तः प्रतिपचताग्गृभीषतावीवृधन्त पुरोडाशैरपुरश्विना सरस्वतीन्द्रः सुत्रामा सुरासोमाँस्त्वामद्य ६० त्वामद्य ऽऋष ऽआर्षेय ऽऋषीणान्नपादवृणीतायं यजमानो बहुभ्य ऽआसङ्गतेभ्य ऽएष मे देवेषु वसु वार्यायक्ष्यत ऽइति ता या देवा देव दानान्यदुस्तान्यस्मा ऽआ च शास्स्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ६१ इति वाजसनेयसंहितायामेकविंशोऽध्यायः २१ तेजोऽसि पञ्चाग्नय एकाहिंकाराय द्वे तत्सवितुर्द्दश विभूमान्नैकाकाय द्वे आ ब्रह्मँस्त्रयोदश शेषा देकैकोन्नविं६

शतिश्चचतुस्त्रिँशत् ॥ तेजोसिशुक्रममृतमायुष्पाऽआयुर्म्मेपाहि ॥
देवस्यत्वासवितुःप्प्रसवे श्विनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्यामा
ददे १ इमामगृभ्णन् ॥ इमामगृभ्णन्नृशनामृतस्यपूर्व्वऽआयुषिवि
दथेषुकव्या ॥ सानोऽअस्मिन्त्सुतऽआबभूवऽऋतस्यसामन्त्सरमा
रपन्ती २ अभिधाऽअसि ॥ अभिधाऽअसिभुवनमसियन्तासिधु
र्त्ता ॥ सत्त्वमग्निंवैश्वानरँसप्प्रथसङ्गच्छस्वाहाकृतः ३ स्वगात्वा॥
देवेभ्यः प्प्रजापतयेब्ब्रह्मन्नश्वम्भन्त्स्यामिदेवेभ्यः प्प्रजापतये
तेनराद्ध्यासम् ॥ तम्बधानदेवेभ्यः प्प्रजापतयेतेनराध्नुहि ४ प्रजा
पतयेत्वा ॥ प्रजापतयेत्वाजुष्टम्प्रोक्षामीन्द्राग्निभ्यान्त्वाजुष्टम्प्रोक्षा

मित्रायवैत्त्वाजुष्टम्प्प्रोक्षांमिविश्श्वैब्भ्यस्त्वादेवेब्भ्योजुष्टम्प्प्रोक्षांमि
सर्वैब्भ्यस्त्वादेवेब्भ्योजुष्टम्प्प्रोक्षांमि ॥ यो॑ऽअर्व्वन्तञ्जिघांॅसतितम
ब्भ्यमीतिवरुणः ॥ पुरोमर्त्तःपरश्श्वा ५ [ ५ ] अग्नयेस्वाहा ॥
अग्नयेस्वाहासोमायस्वाहापाम्मोदायस्वाहासवित्रेस्वाहावायवे
स्वाहाविष्ष्णवेस्वाहेन्द्रायस्वाहाबृहस्पतयेस्वाहामित्रायस्वाहाव
रुणायस्वाहा ६ [ १ ] हिङ्कारायस्वाहा ॥ हिङ्कारायस्वाहाहिंकृता
यस्वाहाक्रन्दतेस्वाहावक्रन्दायस्वाहाप्प्रोथतेस्वाहाप्प्रप्प्रोथाय
स्वाहागन्धायस्वाहाग्घ्रातायस्वाहानिविष्टायस्वाहोपविष्टायस्वाहा
सन्दितायस्वाहावल्गतेस्वाहासीनायस्वाहाशयानायस्वाहास्वपते

स्वाहाजाग्रतेस्वाहाकूजतेस्वाहाप्रबुद्धायस्वाहाविजृम्भमाणाय
स्वाहाविचृत्तायस्वाहासꣳहानायस्वाहोपस्थितायस्वाहायनायस्वा
हाप्रायणायस्वाहा ७ सुतेस्वाहा ॥ सुतेस्वाहाधावतेस्वाहोद्द्रावाय
स्वाहोद्द्रुतायस्वाहाशूकारायस्वाहाशूकृतायस्वाहानिषण्णायस्वाहो
त्थितायस्वाहाजवायस्वाहाबलायस्वाहाविवर्त्तमानायस्वाहाविवृ
त्तायस्वाहाविधून्वानायस्वाहाविधूतायस्वाहाशुश्रूषमाणायस्वा
हाशृण्वतेस्वाहेक्षमाणायस्वाहेक्षितायस्वाहावीक्षितायस्वाहानिमे
षायस्वाहायदत्तितस्मैस्वाहायत्पिबतितस्मैस्वाहायन्मूत्रंकरोति
तस्मैस्वाहाकुर्वतेस्वाहाकृतायस्वाहा ८ [२] तत्सवितुः ॥ तत्स

वितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ९ हिरं
ण्यपाणिमूतये ॥ सवितारमुपह्वये ॥ सचेत्तादेवतापदम् १० देव
स्यचेततः ॥ देवस्यचेततोमहीम्प्रसवितुर्हवामहे ॥ सुमतिᳪं सत्यरा
धसम् ११ सुष्टुतिᳪं सुमतीवृधः ॥ सुष्टुतिᳪं सुमतीवृधोरातिᳪं सवितु
रीमहे ॥ प्रदेवायमतीविदे १२ रातिᳪं सत्पतिम् ॥ रातिᳪं सत्पतिम्महे
सवितारमुपह्वये ॥ आसवन्देववीतये १३ देवस्यसवितुः ॥ देवस्य
सवितुर्म्मतिमासवं विश्वदेव्यम् ॥ धियाभगम्मनामहे १४ अग्नि
ᳪं स्तोमेन । बोधयसमिधानोऽअमर्त्त्यम् ॥ हव्यादेवेषुनोदधत् १५
सहव्यवाट् ॥ सहव्यवाडमर्त्त्यऽउशिग्दूतश्चनोहितः ॥ अग्निर्धिया

समृण्वति १६ अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ ॥ऽआ
सादयादिह १७ अजीजनोहिंपवमानसूर्य्यंविधारेशक्कमनापयः ॥
गोजीरयारँहमाणःपुरन्ध्या १८ [ १ ] विभूर्म्मात्रा ॥ प्रभूःपित्रा
ऽश्वोसिहयोस्यत्योसिमयोस्यर्वासिसप्तिरसिवाज्यसिवृषासिनृ
मणाऽअसि ॥ ययुर्न्नामासिशिशुर्न्नामास्यादित्यानाम्पत्वान्विहिदे
वाऽआशापालाऽएतन्देवेभ्योश्वम्मेधायप्रोक्षितँरक्षतेहरन्तिरि
हरमताभिहधृतिरिहस्वधृतिःस्वाहा १९[२] कायस्वाहा ॥ कायस्वा
हाकस्म्मैस्वाहाकतमस्म्मैस्वाहास्वाहाधिमाधीतायस्वाहामनः
प्रजापतयेस्वाहाचित्तंविज्ञातायादित्यैस्वाहादित्यैमह्यैस्वाहादित्यै

सुमृडीकायैस्वाहासरस्वत्यैस्वाहासरस्वत्यैपावकायैस्वाहासरस्व
त्यैबृहत्यैस्वाहापूष्णेस्वाहापूष्णेप्रपथ्यायस्वाहापूष्णेनरन्धि
षायस्वाहात्वष्ट्रेस्वाहात्वष्ट्रेतुरीपायस्वाहात्वष्ट्रेपुरुरूपायस्वाहावि
ष्णवेस्वाहाविष्णवेनिभूयपायस्वाहाविष्णवेशिपिविष्टायस्वाहा
२० विश्वोदेवस्य ॥ नेतुर्म्मर्त्तोवुरीतसख्यम् ॥ विश्वोरायऽइषु
ध्यतिद्युम्नंवृणीतपुष्यसेस्वाहा २१ [ १ ] आब्रह्मन् ॥ आब्रह्मन्
ब्राह्मणोब्रह्मवर्च्चसीजायतामाराष्ट्रेराजन्यःशूरऽइषव्योतिव्याधी
महारथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिःपुरन्धिर्योषा
जिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्यवीरोजायतान्निकामेनि

कामेनःपुर्ज्जन्न्योव्वर्षतुफलवत्त्योनऽओषधयःपच्च्यन्ताᳪयोगक्षेमो
नःकल्पताम् २२ [१] प्राणायस्वाहा ॥ पानायस्वाहाव्यानाय
स्वाहाचक्षुषेस्वाहाश्श्रोत्रायस्वाहाव्वाचेस्वाहामनसेस्वाहा २३ [१]
प्राच्यैदिशे । स्वाहार्व्वाच्यैदिशेस्वाहादक्षिणायैदिशेस्वाहार्व्वाच्यैदिशे
स्वाहाप्प्रतीच्यैदिशेस्वाहार्व्वाच्यैदिशेस्वाहोदीच्यैदिशेस्वाहार्व्वाच्यै
दिशेस्वाहोर्द्ध्वायैदिशेस्वाहार्व्वाच्यैदिशेस्वाहावाच्यैदिशेस्वाहार्व्वाच्यै
दिशेस्वाहा २४ [१] अद्भ्यःस्वाहाव्वार्भ्यःस्वाहोदकायस्वाहातिष्ठ
न्तीभ्यःस्वाहास्रवन्तीभ्यःस्वाहास्यन्दमानाभ्यःस्वाहाकूप्प्या
भ्यःस्वाहासूद्याभ्यःस्वाहाधार्य्याभ्यःस्वाहार्ण्णवायस्वाहास

मुद्रायस्वाहासरिरायस्वाहा २५ [ १ ] वातायस्वाहा ॥ धूमायस्वा
हाभ्रायस्वाहामेघायस्वाहाविद्योतमानायस्वाहास्तनयतेस्वाहाव
स्फूर्जतेस्वाहावर्षतेस्वाहाववर्षतेस्वाहोग्रंवर्षतेस्वाहाशीघ्रंवर्षते
स्वाहोद्गृह्णतेस्वाहोद्गृहीतायस्वाहाप्रुष्णतेस्वाहाशीकायतेस्वाहा
प्रुष्वाभ्यःस्वाहाह्रादुनीभ्यःस्वाहानीहारायस्वाहा २६ [ १ ]
अग्नयेस्वाहा ॥ अग्नयेस्वाहासोमायस्वाहेन्द्रायस्वाहापृथिव्यैस्वा
हान्तरिक्षायस्वाहादिवेस्वाहादिग्भ्यःस्वाहाशाभ्यःस्वाहोर्व्यैदिशे
स्वाहार्वाच्यैदिशेस्वाहा २७ [ १ ] नक्षत्रेभ्यःस्वाहा ॥ नक्षत्रिये
भ्यःस्वाहाहोरात्रेभ्यःस्वाहार्धमासेभ्यःस्वाहामासेभ्यःस्वाहा

संहि. ऽऋतुभ्यः स्वाहार्त्तवेभ्यः स्वाहा संवत्सराय स्वाहा द्यावापृथिवी उ. अ.

१४ भ्याᳬं स्वाहा चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यः स्वाहा वसु २२

भ्यः स्वाहा रुद्रेभ्यः स्वाहाऽऽदित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा विश्वे

भ्यो देवेभ्यः स्वाहा मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा वनस्पति

भ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥

२८ [ १ ] शतम् १३०० पृथिव्यै स्वाहा ॥ पृथिव्यै स्वाहान्तरिक्षा

य स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहा

द्भ्यः स्वाहौषधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा परिप्लवेभ्यः १४

स्वाहा चराचरेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा २९ [ १ ] असवे

